॥ श्रीजिनाय नमः ॥

# ॥ श्रीस्थूलिभद्रचरित्रं ॥

( कर्त्ता श्रीजयानंदसूरिः )

*छपावी प्रसिद्ध करनार पंडित श्रावक हीरालाल हंसराज ( जामनगरवाळा )*

वीरो वर्यश्रिये वोऽस्तु । जिनेंद्रो जगदर्चितः ॥ रागादिरोधको विश्व—बोधको बुद्धविष्टपः ॥ १ ॥ श्रीवीरशासनांभोज—भासनैकनभोमणेः ॥ स्थूलिभद्रमुनींद्रस्य । चरित्रं किमपि ब्रुवे ॥ २ ॥ अत्रैव भरतक्षेत्रे । विचित्रे विविधैर्जनैः ॥ पाडलीपुत्रमित्यस्ति । पुरं सुरपुरोपमं ॥ ३ ॥ तत्राभूद्भूपतिश्रेष्टो । विभूतिभरभासुरः ॥ प्रतापतपनः कीर्त्ति—कौमुदीधौतदिङ्मुखः ॥ ४ ॥ त्यागभोगमहौदार्यश्रीः । प्रजापालनपंडितः ॥ नंद इत्याख्यया ख्यातो । न्यायद्रुमविहंगमः ॥ ५ ॥ युग्मं ॥ गुरुमंत्री सुरेंद्रस्य । श्रुतशीलो नलस्य च ॥ उद्धवो वासुदेवस्य । श्रेणिकस्याभयो यथा ॥ ६ ॥ तथा तस्य नरेंद्रस्य । शकडाल इति श्रुतः ॥ मंत्री मं-

म दर्शने ॥ १७ ॥ अतो मौनं व्यधादेष । नादाज्ञजापि किंचन ॥ उत्तराशं विना वातं । न
वर्षत्यंबुदोऽपि हि ॥ १८ ॥ दिनैः कतिपयैः सोऽथ । खिन्नश्चित्ते व्यचिंतयत् ॥ ऊपरे वपन-
मिव । निष्फलाजनि मे स्तुतिः ॥ १९ ॥ स ज्ञातकारणः स्तोतु–मारेभे मंत्रिणः प्रियां ॥
येनोपायं विना साध्यं । दुःसाध्यं नैव साध्यते ॥ २० ॥ तयाथ तुष्टया पृष्टो । वद विप्र प्र-
योजनं ॥ सोऽवादीन्मत्कवित्वानि । त्वद्भर्त्तासौ प्रशंसतु ॥ २१ ॥ तयाथ जगदे मंत्री । स्वा-
मिन्नेष द्विजः सदा ॥ कवित्वान्याशया कृत्वा । समुपैति नृपांतिकं ॥ २२ ॥ अशंसया च
युष्माकं । निराशः प्रत्यहं व्रजेत् ॥ तन्नोचितं यतः संतः । प्राणैरप्युपकुर्वते ॥ २३ ॥ प्रोचे
प्रत्युत्तरं मंत्री । मिथ्यात्वं न स्तवीम्यहं ॥ सावद्यन्नैव मिथ्यात्वं । स्यात्कवित्वादिशंसया ॥
॥ २४ ॥ मिथ्यात्वं तत्कुदेवादि–वर्णनं यद्विधीयते ॥ अतो मतिभ्रमादस्य । माशाभ्रंशं कुरु
वृथा ॥ २५ ॥ एवं प्रतिदिनं पत्न्या । प्रोच्यतेस्म स धीसखः ॥ अंधस्त्रीबालमूर्खाणा–माग्र-
हो बलवान् यतः ॥ २६ ॥ अथोपरोधतो मंत्री । तद्वचः प्रत्यपद्यत ॥ नद्या शश्वद्वहंत्या किं
। दृढोऽप्यङ्घ्रिर्न भ्रियते ॥ २७ ॥ पाठांते तत्कवित्वानां । पार्थिवस्य पुरोऽन्यदा ॥ अहो त्र-

भवलोद्दामो–ऽन्ववाद्धिमकुलोद्भवः ॥ ७ ॥ युग्मं ॥ प्रेमपात्रं पुण्यवती । पवित्रा परमार्हती ॥ भार्या लक्ष्मीवती तस्या–ऽभवल्लक्ष्मीरिव श्रिया ॥ ८ ॥ तस्याभूतामुभौ पुत्रौ । स्थूलभद्र-सिरीयकौ ॥ कुलशीलगुणोदारौ । रूपतः स्मरसोदरौ ॥ ९ ॥

अभवन् यक्षा यक्षदिन्ना । भूता च भूतदिन्नका ॥ सेणा वेणा रेणा तथा । तत्पुत्र्यः सप्त विश्रुताः ॥ १० ॥ तत्र वेश्याभवत्कोशा । कलानां कुलमंदिरं ॥ स्वसौंदर्याज्जितस्वर्ग–रमणीरामणीयका ॥ ११ ॥ स्थूलभद्रोऽवसत्तस्या । मंदिरे मुदितोऽनिशं ॥ ततोऽधृतकुलोदार–भारो निश्चिंतमानसः ॥ १२ ॥ प्रायश्चाययुरासन्नं । पृथ्वीशं प्रमदालताः ॥ इत्यमात्यो नृपस्यांग–रक्षं चक्रे सिरीयकं ॥ १३ ॥ विद्याविशारदस्तत्रा–ऽभवद्वररुचिर्द्विजः ॥ कवीनां वादिनां वैया–करणानां शिरोमणिः ॥ १४ ॥ धनाशया धराधीशं । प्रातरेत्यानिशं सुधीः ॥ अष्टोत्तरशतैः श्लोकै–र्नव्यैर्नंदं स शंसति ॥ १५ ॥ नंदोऽप्यस्मै धनं दित्सु–र्मंत्रिणो मुखमीक्षते ॥ मंत्रिमंत्रानुगा येन । राजानः स्युश्चिरायुषः ॥ १६ ॥

सम्यग्दर्शनपूतात्मा । ततो मंत्रीत्यचिंतयत् ॥ संशयैषां कवित्वानां । म्लानिः स्यान्म-

तावद्दोच्यत मंत्रिणा ॥ ३८ ॥ लौकिकानीदृशान्येवं । पठेयुर्मत्सुता अपि ॥ राजाऽज्ञनाय्या-पाठयत्ताः । कौतुकी येन नालसः ॥ ३९ ॥ अथ प्रकुपितो राजा । तस्य दानं न्यवारयत् ॥ उपाया मंत्रिणां येन । निग्रहानुग्रहक्रमाः ॥ ४० ॥ सोऽथ व्याचिंतयत्तस्तयो-ऽप्यलत्योऽहं कृतोऽमुना ॥ विगोपितश्च लोकेषु । तत्सर्वं भवतीदृशं ॥ ४१ ॥

अथ प्रपंचं नव्यं सो-ऽमंडयत्स्वप्रसिद्धये ॥ यतः कलिं विना लोके । नारदो नैव तिष्ठति ॥ ४२ ॥ गंगांतरंबुयंत्रं स । तत्र संस्थाप्य धीवलात् ॥ व्यमुंचत्तत्र दीनार-ग्रंथिं गत्वा स्वयं निशि ॥ ४३ ॥ गंगां प्रातःक्षणे स्तुत्वा । हत्वा यंत्रं निजांह्रिणा ॥ आददसौ धनं धीमान् । प्रपंचो नान्यथा यतः ॥ ४४ ॥ दर्शयन्नथ लोकानां । दत्ते गंगेति सोऽब्रवीत् ॥ ततः प्रसिद्धिरस्येति । प्रथिता पृथिवीतले ॥ ४५ ॥ नूनमेष द्विजः सत्यो । ज्ञानी ध्यानी गुणी कविः ॥ गंगादेव्यपि यद्दत्ते । नंदवद्वांछितं धनं ॥ ४६ ॥ तत् श्रुत्वा विस्मितो राजा-ऽमात्यसूचेऽस्य जाह्नवी ॥ धनं समीहितं दत्ते । मंत्रिन् सत्यमदोऽपि किं ॥ ४७ ॥ स्थिराणां जायते लक्ष्मी-रिति लोकश्रुतेः पुनः ॥ दिनमद्यतनं स्थित्वा । प्रातः सर्वं विलोकयेः ॥ ४८ ॥

व्यानि काव्यानी–त्यवदत्सचिवाग्रणीः ॥ २८ ॥
इत्थं प्रशंसया तस्य । प्रीतः पृथ्वीपतिस्ततः ॥ प्रादात्प्रतिदिनं तस्मै । दिनाराष्टशतं मु-
दा ॥ २९ ॥ तेन राजप्रसादेन । पौरपूज्योऽपि सोऽजनि ॥ राजमान्यस्य वाचापि । जीव्यते
ह्यनुकूलया ॥ ३० ॥ केषुचिद्वासरेष्वेवं । गतेषु सचिवस्ततः ॥ तेनानर्थकदानेन । दूनो नृप-
मदोऽवदत् ॥ ३१ ॥ देव दानं किमेताव–द्यदस्मै दीयतेऽन्वहं ॥ सोचे ते श्लाघनं दत्ते । सर्व-
मेतद्धयं न हि ॥ ३२ ॥ यदि स्वयं वयं दद्मः । किं न दद्मः पुरा ततः ॥ मंत्री प्रोचे प्रभो
नामुं । प्रशंसामि प्रतारकं ॥ ३३ ॥ स्वकीकृत्याऽन्यकाव्यानि । पुरो वः पापठीत्ययं ॥ एत-
त्पठितकाव्यानि । मत्पुत्र्योऽपि पठंति यत् ॥ ३४ ॥ विस्मितो वसुधाधीशः । संशयाकुलि-
तांतरः ॥ परीक्षितुं द्विजातिं तं । प्रोवाचामात्यपुंगवं ॥ ३५ ॥ कथ्ये त्वमस्य पाठांते । स्व-
सुता अपि पाठ्यैः ॥ येनान्यतत्कृतानां च । काव्यानां ज्ञायतेंतरं ॥ ३६ ॥
एकश्रुतादिपाठास्ता । मंत्रिणा निजपुत्रिकाः ॥ जवन्यंतरितास्तत्र । स्थापिताः स्थिति-
शालिना ॥ ३७ ॥ प्रातर्विप्रस्तथैवागात् । पूर्ववत्पठतिस्म च ॥ यावत् स्थितोऽस्ति दानार्थं ।

कृत्य निजं धनं ॥ शृणु शिक्षां द्विजैवं न । शून्यं मोच्यं पुनः क्वचित् ॥ ५९ ॥ इत्युक्त्वा सो-
ऽर्पयामास । तं ग्रंथिं सर्वसाक्षिकं ॥ तेनासौ तां दशां लेभे । या मृतेरपि दुस्सहा ॥ ६० ॥
मंत्री प्रोचे प्रज्ञोऽत्रासौ । विप्रतारयितुं जनं ॥ सायं स्वयं धनं क्षिप्त्वा । प्रातर्लातीति मूढ-
धीः ॥ ६१ ॥ साधु ज्ञातमिदं वत्से–त्यालपन्नृपतिर्ययौ ॥ विस्मयस्मेरनयनो । लोकोऽपी-
त्यवदत्तदा ॥ ६२ ॥ घाटी अंबाडरस्थाने । पानीयाद्वा प्रदीपनं ॥ अमृताद्वा विषावेशो । य-
दस्मात्कूटमीदृशं ॥ ६३ ॥ अहो कौटिल्यकोटित्व–महो कपटपाटवं ॥ अहो कैतवकौविद्य–
महो वंचनचातुरी ॥ ६४ ॥ धिग्धिगेतस्य पांडित्यं । यदनेन कुकर्मणा ॥ विप्रा विगोपिताः
सर्वे । सर्वं शास्त्रं च दूषितं ॥ ६५ ॥ इति लोकोक्तिमाकर्ण्य । सकर्णोऽप्यथ स द्विजः ॥ ल
ज्जितो मुखमाच्छाद्य । पलाय्यागान्निजालयं ॥ ६६ ॥

अथ दध्यावयं चित्ते । मंत्रिणा मेऽद्य तत्कृतं ॥ यत्क्रुधा सिंहशार्दूल–शत्रवोऽपि न कुर्व-
ते ॥ ६७ ॥ यद्वा दत्तोऽस्ति पाशोऽसौ । मयि मत्सरिणामुना ॥ अतो मयापि देयोऽस्य । रं-
गपाशो ह्यधो ध्रुवं ॥ ६८ ॥ भयं नास्मान्मम क्वापि । निर्धनस्य द्विजन्मनः ॥ भयमस्यैव

इत्युक्त्वा तद्दिनं नृपं । संस्थाप्य कथमप्यसौ ॥ तत्प्रपंचमथो ज्ञातुं । प्रैषीत्तत्वाप्तपूरुषं ॥४९॥
शकटस्तत्रांतरे सोऽस्थात् । पक्षीवानुपलक्षितः ॥ ततं वररुचिं तत्र । न्यस्यंतं ग्रंथिमैक्षत ॥
॥ ५० ॥ तज्जीवितमिवादाय । सोऽपि तां ग्रंथिमादरात् ॥ सचिवस्यार्पयामास । सहायैः किं
न साध्यते ॥ ५१ ॥ प्रातस्तत्रागमन्नंदः । सचिवादिसमन्वितः ॥ स्तोतुं सविस्तरं सोऽपि ।
गंगां प्रववृते जडः ॥ ५२ ॥ स स्तवांते पदाघाता—च्चालयन्नथ यंत्रकं ॥ नाप न्यस्तामपि ग्रं-
थिं । कूटमंते यतः कटु ॥ ५३ ॥

सोऽथ लज्जानयभ्रांतः । किमेतदिति विस्मितः ॥ विह्वलश्चिंतयामास । वैपरीत्यमहो वि-
धेः ॥ ५४ ॥ एकतोऽसौ नृपोऽप्यागा—न्मंत्रिमुख्यजनान्वितः ॥ सहसोपस्थितं ह्येत—न्न्या-
साऽलंजनमन्यतः ॥ ५५ ॥ मंत्र्यथोचे त्वया विप्र । न न्यस्तं ह्यत्र किं धनं ॥ कदाचिद्दैवतो
हि स्या—च्छिद्मस्थस्यापि विस्मृतिः ॥ ५६ ॥ अथवा न्यस्तमप्येत—द्गृहीतं किमु केनचित् ॥
नैतत्संभाव्यते येन । नंदभूमौ न तस्करः ॥ ५७ ॥ किमेवं वीक्षसे नीचैः । प्रदत्से नोत्तरं च
किं ॥ तत्कमेवाश वेदांते । धूर्तो धृष्टो हि मौनभाक् ॥ ५८ ॥ मा विषीद गृहाणेद—मुपल-

वनांतोऽभ्यूथ क्रीडतो वालान् । दत्वा दत्वा सुखादिकां ॥ सर्वेष्वपि पथिष्वेवं । पाठयामास स द्विजः ॥ ८१ ॥ राजा न वेत्ति यदसौ । शकमालः करिष्यति ॥ व्यापाद्य नंदं तद्राज्ये । श्रीयकं स्थापयिष्यति । ८२ ॥ राजपाट्यां व्रजन् राजा । श्रुत्वा तद्वाक्यमन्यदा ॥ विस्मितश्चिंतयामासा–ऽमन्त्राख्यं श्रूयते किमु ॥ ८३ ॥ अथवा सत्यमेवेदं । यतो लोकोऽप्यदः पठेत् ॥ नारीबालवचोऽमोघ–ममोघं देवदर्शनं ॥ ८४ ॥ सममग्राम्थ सामग्रीं । चरैर्गेहेऽस्य वीक्ष्य नः ॥ संजातनिर्णयः स्फार–मत्सरो हृद्यचिंतयत् ॥ ८५ ॥ अहो क्रूरः कृतघ्नोऽसौ । मंत्री चेन्मय्यपीदृशः ॥ तदवश्यं निहंतव्यः । सकुटुंवोऽपि शत्रुवत् ॥ ८६ ॥ एवं क्रुद्धो नृपो याव–दासीनोऽस्ति निजासने ॥ तावदेत्यानमन्मंत्री । नृपोऽभूच्च पराङ्मुखः ॥ ८७ ॥ भीतो मंत्री गृहे गत्वा । पुत्रमूचे सिरीयकं ॥ जीवयाद्य नृपे क्रुद्धे । कुटुंवं मम मृत्युना ॥ ८८ ॥ नोचेत्सर्वमिदं नृपो । हनिष्यति कुटुंवकं ॥ नायुक्तमप्यदो येन । लोकेऽपि श्रूयते वचः ॥ ॥ ८९ ॥ त्यजेदेकं कुलस्यार्थे । ग्रामस्यार्थे कुलं त्यजेत् ॥ ग्रामं जनपदस्यार्थे । आत्मार्थे पृथ्वीं त्यजेत् ॥ ९० ॥ ततो नृपं नमंतं मां । वत्स खड्गेन घातयेः ॥ लाग्नहेदो यतस्तद्-

भयेन । भयं भवति भाजने ॥ ६९ ॥ यद्वा प्रायेण लोकेऽत्र । पूर्णस्यैव भयं भवेत् ॥ विधुंतुदोऽपि यच्चंद्रं । ग्रसते पूर्णिमादिने ॥ ७० ॥ यथा घटोंबुपूर्णोऽपि । कर्करेण विभिद्यते ॥ पादः प्रौढोऽपि वा स्वल्प–कंटकेनापि विध्यते ॥ ७१ ॥ तथासौ नृपमान्योऽपि । साचिवः शक्तिमानपि ॥ भयोपायेन हंतव्यः । किमुपायैर्न साध्यते ॥ ७२ ॥

कुठारेण सदंभेन । सुछेदः स्याद्यथा द्रुमः ॥ तथा स्यान्निजयुक्त्याथ । सुखछेद्यो ह्यसौ मया ॥ ७३ ॥ वर्यवीर्याभिगमेण । रामेणापि विभीषणः ॥ रावणोच्छित्तये सम्यग् । स्वीकृतोऽभूदभीष्टदः ॥ ७४ ॥ तृणैस्तृणानि वध्यंते । लोहं लोहेन कृत्यते ॥ इति लोकोक्तितोऽप्यस्य । निजः कोऽप्याहतो वरं ॥ ७५ ॥ इत्यालोच्य समं मंत्रि–दास्या मैत्रीमसौ व्यधात् ॥ नास्त्यकृत्यविधौ सीमा । प्रायो दुष्टात्मनां नृणां ॥ ७६ ॥ लेखशालां पुरं प्रौढां । पाठयन् कपटोत्कटः । मुषकस्येव मार्जार–स्तस्य छिद्राण्यवैक्षत ॥ ७७ ॥ विवाहे श्रीयकस्याथ । प्राभृताय महीपतेः ॥ सामग्रीं रच्यमानां सो–ऽज्ञासीद्दासीमुखात्तदा ॥ ७८ ॥ तदेव छिद्रमासाद्य । शाकिनीव दुराशयः ॥ हृदि प्रमुदितो जज्ञे । धिग् नीचजनजृंभितं ॥ ८० ॥

वनांतोऽन्यत्र मागमः ॥ सोऽथ तत्र गतो धीमा–नेवं चित्ते व्यचिंतयत् ॥ २ ॥

यस्याः पितुर्मृतिर्जज्ञे । यया परवशो नरः ॥ लोकद्वयं यतो याति । मुद्रां तां कः श्रयेत्सुधीः ॥ ३ ॥ यथैकमुद्रया मर्त्यै–र्मुद्रापंचकमाप्यते ॥ पाणौ पादे मुखे कंठे । गेहे सा धीयते कथं ॥ ४ ॥ इह लोके परं दुःखं । परलोके च दुर्गतिः ॥ यस्याः संपर्कतः पुंसां । सा मुद्रा मुद्रिता शुभ्रा ॥ ५ ॥ नाऽशनं न शयनं न मज्जनं । स्यात्कदापि समये नियोगिनां ॥ किंच नान्यदपि शर्मसाधनं । तद्धनेऽपि सति रंकका अमी ॥ ६ ॥ अधिकारात्रिभिर्मासै–र्माठापत्यात्रिभिर्दिनैः ॥ शीघ्रं नरकवांछा चे–द्दिनमेकं पुरोहितः ॥ ७ ॥ अश्वतरीणां गर्भो । दुर्जनमैत्री नियोगिनां लक्ष्मीः ॥ स्थूलत्वं श्वयथुभवं । विना विकारेण नाप्यंते ॥८॥ मुद्राणां जिनमुद्रेयं । ग्राह्या यत्संगतो जनः ॥ इह लोके जगद्वंद्यः । परलोके महासुखी ॥ ॥ ९ ॥ इत्यालोच्य स्वयं छित्वा । प्रावृतं रत्नकंबलं ॥ कृत्वा रजोहृतं नृप–मभ्येत्यादोऽवदद्वचः ॥ १० ॥ धर्मलाभोऽस्तु ते राज–न्नालोचितमिदं मया ॥ विस्मितोऽवग्नृपः सुष्टु । निर्वेदः स्वीकृतं व्रतं ॥ ११ ॥

ज्ञा—स्तर्कयंति विशेषतः ॥ ९१ ॥ श्रुत्वेति शोकसंभार—संभृतः पिहितश्रवाः ॥ आः पापं न शृणोमीति । शुद्धधीः सोऽन्यधात्तदा ॥ ९२ ॥ मंत्र्यूचे वत्स विज्ञोऽसि । वचो मन्यस्व मे हितं ॥ निघ्नतो मां नृपक्रमात् । किंचित्ते नास्ति दूषणं ॥ ९३ ॥ सोऽथ मेने तदादिष्टं । तत्तथैवाकरोच्च सः ॥ राजोचे किमदोऽकार्षी—र्हा हा श्रीयक दुर्मते ॥ ९४ ॥ श्रीयकोऽवग्विज्ञो यो वो । नेष्टो नोऽपि तथैव सः ॥ स्वामिवैरीति संभाव्य । हतोऽस्येष न दूयते ॥९५॥

कृत्वोर्ध्वदेहिकं स्माह । श्रीयकं नृपतिस्ततः ॥ गृहाणेमां पितुर्मुद्रां । तद्वच्च च मंत्रिराट् ॥ ९६ ॥ सोचे वृद्धोऽस्ति मद्भ्राता । स्थूलभद्र इति श्रुतः ॥ कोशागृहे गुणग्रामा—भिरामः सुभगाग्रणीः ॥ ९७ ॥ तुष्टो राजा विशेषेण । तमथाजूहवत्ततः ॥ यतो भिषक्नृपामात्या । वृद्धा एव प्रशंसिताः ॥ ९८ ॥ सोऽपि द्वादशवर्षीं ते । तदा नृपनरेरितः ॥ निर्ययौ तद्गृहात्किंचि—च्चिंताचकितचेतनः ॥ ९९ ॥ क्रमान्नृपांतिकं प्राप्तः । प्रणनाम नरेश्वरं ॥ नृपः प्रोचे गृहाणेमां । मुद्रां मुदितशात्रवां ॥ १०० ॥ सोऽवग्मुद्रामुपादास्ये । विचार्यैव न्ते ॥ विमृश्य विहितं कार्यं । विक्रियां याति यन्न हि ॥ १ ॥ राजोचे चिंतयाशोक—

र्युः स्त्रीवशा हि किं ॥ २२ ॥ विज्ञाय तं तथा विप्रं । कृतार्थोऽभूत् सिरीयकः ॥ उपाये प्रबले प्राप्ते । नोपेयं दुर्लभं यतः ॥ २३ ॥ शकडालमहामात्य—मृतेः प्रभृति स द्विजः ॥ निःशङ्को राजसेवायै । प्रवृत्तः प्रतिवासरं ॥ २४ ॥ शकडालगुणग्रामं । स्मृत्वा नृपोऽन्यदावदत् ॥ सभायां सभ्यलोकानां । पश्यतां श्रीयकाग्रतः ॥ २५ ॥ शक्तो भक्तो महामात्यः । शकडालोऽभवन्मम ॥ एवमेव मृतो यत्त—द्बाधते शल्यवद्भृशं ॥ २६ ॥ श्रीयकोऽप्यवददेव । दोषः स्तोकोऽपि तेऽत्र न ॥ मद्यपोऽयं वररुचिः । सर्वपापमदो व्यधात् ॥ २७ ॥ विस्मितोऽवग्नृपः सत्यं । मद्यपोऽयं द्विजः किमु ॥ श्वो वोऽमुं दर्शयिष्यामी—त्यवदत् श्रीयकः पुनः ॥२८॥ द्वितीयेऽह्नि श्रीयकोऽपि । सभ्यानामीयुषां सदः ॥ शिक्षितेन स्वपुंसा द्रा—गेकैकं पद्ममार्पयत् ॥ २९ ॥ तदा तत्रोपविष्टस्य । मंत्री वररुचेः पुनः ॥ दापयामास मदन—फलभावितमंबुजं ॥ ३० ॥ तेन घ्रातेन सद्योऽपि । व्याकुलीभूतमानसः ॥ रात्रिपीतां चंद्रहास—मदिरां सोऽवमत्ततः ॥ ३१ ॥ धिक्कृतो निखिलैर्लोकै—र्निर्ययौ सदसस्तदा ॥ पातकं पातयत्येव । यत्कृतमपि निर्मितं ॥ ३२ ॥ प्रायश्चित्तं ददुर्विप्राः । स्मार्त्तास्तस्य नृपाज्ञया ॥ सुततत्रपुणः

दध्यौ राजा मिषादेष । ध्रुवं कोशागृहे गमी ॥ अतः प्रासादशृंगस्थ—स्तं गच्छंतं व्यलोकयत् ॥ १२ ॥ मृतकेभ्यो जनो यत्र । थूत्करोति पलायते ॥ तस्मिन्मार्गेऽपि स ययौ । निर्विकारमना मुनिः ॥ १३ ॥ तेनाथ नूनूता मंत्री । श्रीयको विदधे तदा ॥ स्थूलभद्रस्तु संभूति—सूरेः शिष्योऽभवत्पुनः ॥ १४ ॥ श्रीयकोऽथ महामंत्री । स्वभ्रातुः स्नेहतः सदा ॥ कोशायाः सदने याति । बंधुस्नेहो हि दुस्त्यजः ॥ १५ ॥ स्थूलभद्ररता सान्यं । पुमांसं न समीहते ॥ उत्तमेषु यतः स्नेह—स्तादृशामपि तादृशः ॥ १६ ॥ स्थूलभद्रवियोगार्त्ता । श्रीयकं वीक्ष्य साऽरुदत् ॥ इष्टेह यतो दुखं । दुःखार्त्तानां नवीभवेत् ॥१७॥ श्रीयकोऽप्यवदत्कोशां । विज्ञायवदनस्तदा ॥ शृणु श्रव्यं वचो भ्रातृ—जाये मे युक्तिसंयुतं ॥ १८ ॥ यदस्माकं मृतस्तातः । सोदरोऽभूच्च यद्व्रती ॥ भर्तुस्ते यद्वियोगश्च । तत्रायं कारणं द्विजः ॥ १९ ॥ द्विजोऽयमुपकोशायां । त्वज्जाम्यामस्ति रागवान् ॥ यावत्तावत्खलस्यास्य । कुरु कांचित्प्रतिक्रियां ॥२०॥ उपकोशां निजां जामिं । तथा वद मनस्विनि ॥ विप्रतार्य विधत्तेऽमुं । मद्यपाने रतं यथा ॥ २१ ॥ तद्वचः सा प्रतिज्ञायो—पकोशामप्यमानयत् ॥ तद्वाक्यान्मद्यपः सोऽभू—न्न कु-

धनं ॥ ४४ ॥ सुकरा सद्गुरोः सेवा । सुकरा शास्त्रसंगतिः ॥ सुकरा सत्क्रिया लोके । दुःकरं चित्तशोधनं ॥ ४५ ॥ जलक्षालनया वस्त्रं । वह्नितापनयार्जुनं ॥ यथा निर्मलतामेति । चित्तं कामजयात्तथा ॥ ४६ स दुष्करतरः प्रायः । प्राणिनामविवेकिनां ॥ सुजया रिपवो बाह्या । दुर्जया ह्यांतराः पुनः ॥ ४७ ॥ मत्तेभकुंभदलने भुवि संति शूराः । केऽपि प्रचंडमृगराजज-येऽपि शक्ताः ॥ किंतु ब्रवीमि बलिनां भवतां पुरस्तात् । कंदर्पदर्पदलने विरला मनुष्याः ॥ ॥ ४८ ॥ अथवा—अह्नाय वह्नौ वहवो विशंति । शस्त्रैः स्वगात्राणि विदारयंति ॥ कृच्छ्राणि चित्राणि समाचरंति । माराारिवीरं विरला जयंति ॥ ४९ ॥

यौवनेऽस्मौ स्मरजयो । विशेषाद्विषमोगिनां ॥ दुस्तरोऽब्धिः स्वभावेन । किं पुनर्ग्रीष्म-भीषणः ॥ ५० ॥ यतः—अतिवाहितमतिगहनं । विनापवादेन यौवनं येन ॥ दोषनिधाने ज-न्मनि । किं न प्राप्तं फलं तेन ॥ ५१ ॥ ये न स्खलंति ते दक्षाः । कृष्णकेशतमोभरे ॥ वा-र्द्धके तु सदाद्योति—शिरःस्थपलितैर्द्रुतः ॥ ५२ ॥ ततः समग्रसामग्री—संभवे सति सांप्रतं ॥ कृत्वा कामजयं कुर्वे । स्वं कृतार्थमकंटकं ॥ ५३ ॥ एवं सद्ध्यानवान् स्थूल—भद्रोऽपि सुतपः-

पानं । तेन मृत्युमवाप सः ॥३३॥ यतः—दुष्टानां दुर्जनानां च । पापिनां क्रूरकर्मणां ॥ अ-
नाचारप्रवृत्तानां । पापं फलति तद्भवे ॥ ३४ ॥ अथ श्रीस्थूलभद्रोऽपि । विहरन् गुरुभिः स-
मं ॥ चित्ते चिंतामिमां चक्रे । चारित्रचतुराशयः ॥३५॥ एकैकयोगयोगेन । ययुर्जीवाः परं प-
दं ॥ अनंता इति जैनेंद्र—शासनज्ञानिनो जगुः ॥ ३६ ॥ पुलिंदः प्राग्भवे पंच—परमेष्टिपराय-
णः ॥ राजपुत्रोऽभवद्राज—सिंहः सिंहपराक्रमः ॥ ३७ ॥ अशोको मालिकः पूजां । प्रथय-
न्नवभिः सुमैः ॥ भवे भवे नवनवां । संप्राप परमां रमां ॥ ३८ ॥ संगमोऽपि मुनेर्दाना—
दाप सर्वार्थसंगमं ॥ सुदर्शनोऽपि शीलेन । द्विधा लेभे महोदयं ॥ ३९ ॥ ढंढणाद्यास्तपस्त-
प्त्वा—ऽकलयन् केवलश्रियं ॥ भावतो भरताद्यास्ते—ऽभवन् भुवनभूषणं ॥ ४० ॥ एवमेकैक-
संयोग—प्रयोगप्रगुणाशयाः ॥ मुक्तिमापुरतः सम्यग् । योगमेकमहं श्रये ॥ ४१ ॥

सुकरं मलधारित्वं । सुकरं दुःकरं तपः ॥ सुकरः संवरोऽक्षाणां । दुःकरं चित्तशोधनं ॥
॥ ४२ ॥ सुकरं वनवासित्वं । सुकरं शैलसेवनं ॥ सुकरः सरितां संगो । दुःकरं चित्तशोध-
नं ॥४३॥ सुकराऽऽतापना तीव्रा । सुकरं मौनधारणं ॥ सुकरं चोर्ध्वसंस्थानं । दुःकरं चित्तशो-

कष्टं विना कष्टं । नाप्यते विमलं फलं ॥ ६४ ॥ दृष्ट्वा तेषां तपस्तीव्रं । सिंहसर्पारघट्टिकाः ॥ शमं गता यतो लोके । तपस्तेजोऽतिदुस्सहं ॥ ६५ ॥ अथ श्रीस्थूलभद्रोऽपि । नत्वा गुरुपदांबुजं ॥ धन्यंमन्यश्चलन्नाप । क्रमात्कोशागृहांगणं ॥ ६६ ॥ धर्माशिः प्रददे तेन । नोच्चकैनैव सादरं ॥ निर्विशेषमनस्काः स्यु–र्यतः सर्वत्र निर्ममाः ॥ ६७ ॥ तं दृष्ट्वा मुदिता दासी । मयूरीव महांबुदं ॥ कोशापुरः प्रमोदेन । गत्वोवाच वचस्विनी ॥ ६८ ॥ वर्द्धाप्यसे विघिह्ने त्वं । खेदं त्यज सुखं भज ॥ मन्यसे त्वं सुरादीनां । कृते यस्योपयाचितं ॥ ६९ ॥ क्लिश्यसे विविधैः क्लेशैः । खिद्यसेऽतिघनं हृदि ॥ पृच्छसि प्रत्यहं प्रज्ञान् । क्षुधानिद्रे विमुंचसि ॥ ७० ॥ वियोगाद्यस्य ते जातो । वासरो वत्सरोपम. ॥ मासः प्राणप्रवासाभः । शतयामा च शर्वरी ॥ ७१ ॥ स ते प्राणप्रियो भर्त्ता । भाग्यैर्भोगपुरंदरः ॥ संप्राप्तो द्वारदेशेऽस्ति । यतिवेषधरोऽधुना ॥ ७२ ॥ इति तद्वाक्यमाकर्ण्य । साभूदुच्छ्वसिता मुदा ॥ वारिसिक्ता सुवल्लीव । दत्तस्नेहेव दीपिका ॥ ७३ ॥

अहो भाग्यमहो भाग्यं । पुण्यं जागरितं मम ॥ एवं ब्रुवाणा संप्राप्ता । तत्र यत्रास्त्य-

परः ॥ विहृत्य भूतले भूयः । पाटलीपुत्रमागमत् ॥ ५४ ॥ तत्र स्वपरयोर्लाभं । भूयांसं वीक्ष्य सूरयः ॥ चतुर्मासीकृते तस्थु–र्दक्षा लाभार्थिनो यतः ॥५५॥ वर्षाकालमुखेऽन्येद्यु–रागत्य गुरुसन्निधौ ॥ साधवोऽसाधयन्नाना–भिग्रहानिति साग्रहाः ॥ ५६ ॥ साधुरेकोऽवदत्तत्र । प्रभो सिंहगुहांतरे ॥ चतुर्मासीमवस्थास्ये । कृतोत्सर्ग उपोषितः ॥ ५७ ॥ द्वितीयोऽवग्विभो पूर्व–युक्त्यैव भवदाज्ञया ॥ स्थास्याम्यहं स्थिरस्वांतः । कूपकांचितदारुणि ॥ ५८ ॥ ततः प्रोचे तृतीयोऽपि । तेनैव विधिना विभो ॥ स्थास्यामि भीमभुजग–बिलाभ्यर्णे भयोज्झितः ॥ ५९ ॥

यावद्योग्यान्मुनीन्मत्वा । गुरुस्तानन्वमन्यत ॥ तावन्नत्वा पुरो भूय । स्थूलभद्रोऽब्रवीदिति ॥ ६० ॥ प्रभोऽहं षड्रसाहारः । कोशाया मंदिरोदरे ॥ चतुर्मासीं विधास्यामि । युष्मदादेशतो मुदा ॥ ६१ ॥ उपयुज्य गुरुः स्माह । वत्स वात्सल्यसागर ॥ निर्वहेः सुकृतं सुष्ठु । स्थितिरेषा सतां यतः ॥ ६२ ॥ सोऽपि तद्वचनं चारु । तथेति प्रत्यपद्यत ॥ इष्टलब्धं यतः पुंसा–ममृतादतिरिच्यते ॥ ६३ ॥ अथायास्ते त्रयोऽप्युक्त–स्थानेषु यतयो ययुः ॥ यतः

॥ विश्राम्यति वरछायां । प्राप्य श्रांतो यतः स्फुटं ॥ ७५ ॥ प्रावृट्कालेऽथ संप्राप्ते । व्याप्तं व्योम घनैर्घनैः ॥ प्रानीयप्रकरैः पृथ्वी । धारासारैस्तदंतरं ॥ ७६ ॥ वारिदा विद्युदुद्योतै-र्विश्वं वीक्ष्योरुगर्जितैः ॥ घोषयंतीव न स्थूल-भद्रादन्यो मुनिः क्षितौ ॥ ७७ ॥ नूतनांभोधरांभोभि-र्भूमिरंकुरिता तदा ॥ चित्रं तत्र मुनेः क्षेत्र । न पुनर्मदनांकुरः ॥ ७८ ॥ जिह्मता परिवेषाद्यैः । सूर्यचंद्रारप्यभूत्तदा ॥ ज्ञानोद्योतस्तथैवास्य । मुनेरासीत्प्रभास्वरः ॥ ७९ ॥ तदाभून् केतकामोदै-र्मेदुरैर्भ्रमरभ्रमः ॥ महर्षेर्नो पुनस्तस्य । सुस्थिरस्य मतिभ्रमः ॥ ८० ॥ तस्मिन्नवसरे हंसाः । सरांसि सहसाऽत्यजन् ॥ गुणहंसाः पुनर्नोऽस्य । सदा स्वछं तु मानसं ॥ ८१ ॥ पदार्था नीरसा येऽत्र । सरसास्तेऽभवन् समे ॥ सदा शांतरसासक्तं । विनैकं तं महामुनिं ॥ ८२ ॥ तस्मिन् वर्षाप्रकर्षेऽभू-च्छेदो दार्ढ्यभृतामपि ॥ साधोस्तस्य पुनः शील-सुमेरोर्न कथंचन ॥ ८३ ॥ अथाहंकारसंभार-स्फारो मारो मनस्यथ ॥ चिंतयामासिवानेवं । दार्ढ्यमस्य विलोक्यतां ॥ ८४ ॥ वाढं मदीया भूत्वासौ । शत्रूणां मिलितोऽधुना ॥ तदाज्ञां मौलिना धत्ते । तद्रूपं कलयत्यलं ॥ ८५ ॥

सौ मुनिः ॥७४॥ करौ नियोज्य विनया–न्नतांगी सा मृगेक्षणा ॥ सुधामधुरया वाचो–वाच वाचंयमेश्वरं ॥ ७५ ॥ सनाथा नाथ जाताहं । फलितं मे मनोरथैः ॥ यत्त्वयाऽचिंतितोऽद्या-न्नू–त्समदृसैव समागमः ॥ ७६ ॥ वसंतर्तुं विना पिकया । रथांग्या वा रविं विना ॥ यथा कालः करालः स्या–त्वां विनाऽनूत्तथा मम ॥ ७७ ॥ प्रज्ञो पुण्यन्नरं प्राप्ता । सप्रसादं प्रसीद मे ॥ सर्वत्र स्नेहलाः संतः । किं पुनः स्नेहले जने ॥ ७८ ॥ त्वं मे गतिर्मतिस्त्वं मे । त्राणं त्वं मम जीवितं ॥ श्वासस्त्वं मे हृदाधारो । बहिरद्यापि किं ततः ॥ ७९ ॥ स्माह श्रीस्थूलन्नद्रोऽपि । त्वत्तः किंचिदुपाश्रयं ॥ चतुर्मासीकृते याचे । यतिस्थितिरियं यतः ॥ ८० ॥

सोचे नाथ निजाधीने । पदार्थे प्रार्थना वृथा ॥ यन्मदीयं मदीयस्य । तत्ते स्यान्निखिलं न किं ॥ ८१ ॥ नैवं वद मुनिः स्माह । सोपचारमिदं वचः ॥ अणगारा वयं येन । परगेहनिवासिनः ॥ ८२ ॥ अथ सा विस्मिता दध्यौ । नवीनोऽयमिवाजनि ॥ तथाप्यंतर्गृहे प्राप्तो । व्याप्तो न्नोगैर्न्नविष्यति ॥ ८३ ॥ पुनः स्मेरानना स्माह । साधुं सोपाश्रयार्थिनं ॥ विशाला चित्रशालास्ति । योग्या चेद् गृह्यतां ततः ॥ ८४ ॥ इत्युक्ते तामलंचक्रे । मुनिर्दिवमिवार्यमा

को हि चंदनकाननं ॥ ५ ॥ एकस्य नरमात्रस्य । कृते जन्मार्जितं यशः ॥ हारयेत्को बुधो यस्मात् । युद्धस्य विषमा गतिः ॥ ६ ॥ यतः—

पुष्पैरपि न योद्धव्यं । किं पुनर्निशितायुधैः ॥ युद्धे विजयसंदेहः । प्रधानपुरुषक्षयः ॥ ॥ ७ ॥ अतश्चैनं यतिं विप्रं । मर्मज्ञं स्वगृहागतं ॥ मुंच मुंच विनाप्येनं । विश्वं जेता यतो भवान् ॥ ८ ॥ पादस्यैकस्य भंगे किं । खंजः शतपदी भवेत् ॥ बिंदोरेकस्य शोषे किं । न्यूनोऽयं स्यान्महांबुधिः ॥ ९ ॥ एवं तस्या वचः श्रुत्वा । पुनः प्रोवाच मन्मथः ॥ मुग्धे बाढं विमूढासि । न तत्त्वज्ञासि सर्वथा ॥ १० ॥ छिद्रे स्वल्पेऽपि पोतः किं । पाथोधौ नैव मज्जति ॥ न दुर्गं गृह्यते वैरी—दुर्गांशे पातितेऽपि किं ॥ ११ ॥

एकस्मिन्नजिते शत्रौ । सर्वमप्यजितं भवेत् ॥ एकदापि सती लुप्त—शीला स्यादसती सदा ॥ १२ ॥ उपेक्षां न बुधः कुर्या—दृणरोगरिपुष्विह ॥ उपेक्षिता हि वर्द्धंते । वर्द्धिता दुःखदायिनः ॥ १३ ॥ वैरवैश्वानरव्याधि—वादव्यसनलक्षणाः ॥ महानर्थाय जायंते । वकाराः पंच वर्द्धिताः ॥ १४ ॥

तत्पक्षं पोषयत्येष । मत्पक्षक्षयकांक्षया ॥ इयताप्यस्य नो तृप्ति-रागात्स्थानेऽपि यन्मम ॥ ९६ ॥ तदसौ शक्तिमानस्तु । हंतव्यो व्रतधार्यपि ॥ शत्रुजितं सहंते हि । न स्तोकमपि मानिनः ॥ ९७ ॥ यतः—वैश्वानरः करस्पर्शं । मृगेंद्रः श्वापदस्वनं ॥ क्षत्रियाश्च रिपुक्षेपं । न सहंते कदाचन ॥ ९८ ॥ शैला येनाग्निना दग्धाः । पुरः के तस्य पादपाः ॥ उत्पाटिता गजा येन । का वायोस्तस्य पुंजिका ॥ ९८ ॥ योऽहं हुंकारमात्रेण । विजेतुं विश्वमप्यलं ॥ अहंपूर्विकया यं मां । सेवंते देवदानवाः ॥ ९९ ॥ तस्य मे पुरतः कोऽयं । यतिर्नूतनतापसः ॥ यन्मयासौ जितपूर्वः । तद्विस्मार्यः कथं जडः ॥ १०० ॥ इति क्रोधोद्धुरो याव-द्योद्धुमुत्तिष्टते स्मरः ॥ रतिः ससंभ्रमा तावत् । पप्रच्छ क्रोधकारणं ॥ १ ॥ सोऽपि संक्षेपतस्तस्यो-दंतं नं मूलतोऽब्रवीत् ॥ रिपूत्कर्षे हि सावज्ञं । मनः प्रायो मनस्विनां ॥ २ ॥ वृत्तांतं तं समाकर्ण्य । साप्यन्तर्विस्मिता तदा ॥ दृष्टे श्रुते वा नव्येऽर्थे । विस्मयी को न जायते ॥ ३ ॥ पुनर्विचार्य चतुरा । स्मरं स्माह रतिस्तदा ॥ नाथ क्रुद्धरिपून्माथ । विचारय वचो मम ॥ ४ ॥ को नाम कीलिकाहेतोः । प्रासादोच्छेदमिच्छति ॥ भस्मने भस्मसात्कुर्यात् ।

तंप्रति ॥ २५ ॥ न दिशो विदिशो नापि । नाकाशं न च काश्यपी ॥ आलोकि केवलं लो-
कैः । शराङ्कितमयं यथा ॥ २६ ॥ स्थूलभद्रोऽपि विज्ञाय । स्मरं प्रकटमत्सरं ॥ सद्दर्शनम-
हामात्य-शक्तिसंशोभितविक्रमः ॥ २७ ॥ पंचांगयोगयोगेन । कृतपंचांगरक्षणः ॥ सलीलं शी-
लसन्नाही । जिनादेशशिरस्ककः ॥ २८ ॥ चारुचारित्रमत्कंध-सिंधुरस्कंधसंगतः ॥ सुनिर्म-
लतरध्यान-करवालकरालितः ॥ २९ ॥ सत्क्रियाफलकापास्त-शत्रुशस्त्रभरः स्वयं ॥ विवेका-
दिमहावीर-वीरविस्फारितांतिकः ॥ ३० ॥

शमादिसुतसंदोह-संभावितसमीपकः ॥ संयमादिसुसामंत-संगसंग्रामसूद्भरः ॥ ३१ ॥
श्रुतज्ञानपरावर्त्तो-पदेशपठनस्वनः ॥ रणतूर्यगणोद्रेक-विद्रावितरिपुव्रजः ॥ ३२ ॥ पूर्वापमा-
नसंभार-स्मरणोद्धुरमत्सरः ॥ भर्त्सयन्निति तं योद्धु-मढौकत दृढाशयः ॥ ३३ ॥ रे रे काम
जगद्वाम । जगद्वैरिन् दुराशय ॥ फल्गुवल्गित वाचाल । किं दृप्यसि मुधा जड ॥३४॥ रे
रे स्वयमनंगोऽसि । सहायास्तेऽबलाः पुनः ॥ तातोऽपि ते मनः क्लीबं । तूलवच्चातिचंचलं ॥३५॥
तत्किं केन बलेनैवं । मदमुद्वहसे मुधा ॥ प्रसिद्धापि श्रुता नास्ति । नीतिरेषापि किं त्वया

तस्माद्दिपुरयं ज्ञेयो । मा ज्ञैषीः स्नेहकातरे ॥ जगज्जैत्रगुणं त्वं मां । प्रागपि ज्ञातव-त्यसि ॥ १५ ॥ अथ स्माह रतिः स्वामिन् । युक्तमेव त्वयोदितं ॥ तथापि सज्जय निजं । सैन्यं नीतिरियं यतः ॥ १६ ॥ यतः—एको ध्यानमुज्झौ पाठः । त्रयो गीतं चतुः पथं ॥ पंचसप्त कृषिं कुर्यात् । संग्रामो बहुभिर्जनैः ॥ १७ ॥ यतः——तृणैराच्छाद्यते गेहं । तंतुभिर्बध्यते गजः ॥ इति मत्वा विज्ञो विद्धि । समुदायो जयावहः ॥ १८ ॥ इति तद्वचनव्यक्त—युक्त्या कामोऽपि रंजितः ॥ क्षणाददैन्यः सैन्यसंवृत्तः शीघ्रमभूदिति ॥ १९ ॥ रागद्वेषादिसामंत—संमतोत्तममानसः ॥ मिथ्यात्वाभिधदुर्मंत्रि—मंत्रमंत्रितपौरुषः ॥ २० ॥ गर्वोद्धुरगजारूढः । स्नेहसन्नाहशोभितः ॥ हास्यादिसबलस्वीय—सुतश्रेणिसमावृतः ॥ २१ ॥ क्रोधादिदुर्धरक्रुद्ध—योधघोरणिबंधुरः ॥ निजौजसा जगन्मन्य—मानो मानोन्नतस्तृणं ॥ २२ ॥ गीतसंगीतसंज्ञार—संभूतस्वरसंचयैः ॥ कृतदुंदुभिनिःस्वान—पटहादिपटुभ्रमः ॥ २३ ॥

मुंचन्नुदारहुंकारान् । गर्जन्नत्युर्जितं स्मरः ॥ दूरापाती शीघ्रवेधी । दुढौके योद्धुमुद्धुरः ॥ २४ ॥ कुंडलीकृतदुर्ध्यान—कोदंडो विषयाशुगान् ॥ विविधान् विविधक्षेपै—स्तत्रा चिक्षेप

पीठे । पक्वपत्रमिव क्षणात ॥ मद्भिर्निर्मिता स्पर्धा । पतनाय यतो भवेत् ॥ ४७ ॥ नष्टाः क्रोधादयः सर्वे । हते तस्मिन्महीपतौ ॥ अरकाः क्वापि तिष्ठंति । चक्रे भग्नेऽपि किं दृढाः ॥ ॥४८॥ अथ प्रमुदितैर्देवै—श्चक्रे जयजयारवः ॥ तादृग्प्रवीरजैत्रेऽस्मिन् । को न विस्मयवान् जनः ॥ ४९ ॥ अथ कोशाभिधा वेश्या । रतिदेश्या तदा मुदा ॥ कदलीगर्भगौरांगी । चंद्रवक्त्रा मृगेक्षणा ॥ ५० ॥ जयंती गमने हंसां—स्तर्जयंती सुधां गिरा ॥ क्षोभयंती दृशा विश्वं । मोहयंती रुचा जनं ॥ ५१ ॥ रूपतः किल रंभेव । सौभाग्यात्सुरसुंदरी ॥ लक्ष्मीर्लावण्यतो वापि । प्रत्यक्षं क्ष्मामुपागता ॥ ५२ ॥ रणत्कनकमंजीरा । स्फुरद्धारगणा हृदि ॥ झणत्कांचीकलापा च । चलन्निर्मलकुंडला ॥ ५३ ॥ दिव्यांगरागसौरभ्य—भरवासितदिङ्मुखा ॥ दुकूलैः सुकुमालैश्च । सर्वतोऽपि सुशोभिता ॥ ५४ ॥ स्वभावसुभगा सार—शृंगारेण विभूषिता ॥ जगन्मोहनवल्लीव । मुनिपार्श्वमुपाययौ ॥ ५५ ॥ पभिः कुलकं ॥

अथ यौवनसंयोग—दर्शितानेकविभ्रमा ॥ व्यभाद्विद्युल्लतेवैषा । मुनिमेघांतिके तदा ॥ ॥ ५६ ॥ मोटयंती तनुयष्टिं । दर्शयंती निजस्थितिं ॥ पठयंती कलाकेलिं । मनः केषां ज-

॥ ३६ ॥ यतः—अविमृश्य स्वपरयोः । शक्तिमुत्तिष्ठते तु यः ॥ सोऽब्दशब्दे शरभवत् । प्रोल्ल-लन्नंगभंगभाक् ॥ ३७ ॥ अस्माकं पूर्वजैः पूर्वं । पराभूतोऽपि भूरिशः ॥ तदन्वयभवं किं मां । तत्तुल्यं नैव पश्यसि ॥ ३८ ॥ सिंहजाता ध्रुवं सिंहा । इति सत्या जनश्रुतिः ॥ किंतु ता-मपि विस्मार्य । समायातोऽसि दुर्मते ॥ ३९ ॥

इत्याक्षिप्य खरैर्वाक्यै—स्तच्छस्त्रौघं निरस्य च ॥ यावत्खड्गप्रहारात्तं । विधत्ते विधुरं मु-निः ॥ ४० ॥ तावच्छमादिभिर्वीरैः । क्रोधाद्याः सुभटव्रजाः ॥ तथा जर्जरितां वांगं । यथा चक्रुः पलायने ॥ ४१ ॥ परासूंस्तानथो वीक्ष्य । कामः क्रोधादिकान्निजान् ॥ पुनर्योद्धुमथा-विष्ट । कोपाविष्टः कृतांतवत् ॥ ४२ ॥ विमुंचन् विशिखव्रातं । शमादींस्त्रासयन्नयं ॥ रे रे द्विज पलायस्व । विब्रुवन्नित्ययुध्यत ॥ ४३ ॥ अथ श्रीस्थूलभद्रोऽपि । सर्वशास्त्रकृतश्रमः ॥ कुंडलीकृतवान् कोपात् । सम्यक् सद्योगकार्मुकं ॥ ४४ ॥ स्वधैर्यध्यानटंकारं । स्फारं कृत्वा रणोद्धुरः ॥ स्वाध्यायशरसंभारैः । स्खलयामास तत्क्षणं ॥ ४५ ॥ खड्गव्यग्रकरो वीरः । सं-प्राप्यावसरं ततः ॥ तथा जघान तं वामं । कामं मर्मणि मर्मवित् ॥ ४६ ॥ यथा पपात भू-

प्यहं ॥ ६८ ॥ प्रस्तावज्ञो मुनिः स्माह । मौनं ज्ञेऽहितं ततं ॥ जिनेंद्रा अप्यनुत्पन्न—केवला नो वदंति यत् ॥ ६९ ॥ यतः—मुंच मुंच पतत्येवं । नामुंचत्पतितं द्वयं ॥ अन्नयोः पतितं श्रुत्वा । मौनं सर्वार्थसाधनं ॥ ७० ॥ मुनिश्रयकथां मत्वा । श्रेष्ठिवाक्यद्वयं तथा ॥ इदमेव मतामिष्टं । मौनं सर्वार्थसाधनं ॥ ७१ ॥ यत्त्वयोक्तं व्रतं तीव्रं । देहेनानेन दुष्करं ॥ तन्न सत्यं यतो देहो । देवैरप्येष दुर्जयः ॥ ७२ ॥ न दिव्येनापि देहेन । साध्यमस्य प्रसाध्यते ॥ अयं मोक्षावधिप्राप्ति—प्रभुर्देहो न नाकिनां ॥ ७२ ॥ देहोऽयं कोमलस्तेऽस्ति । यद्वादि तदप्यसत् ॥ जलं विशति सर्वत्र । कठिनोऽपीह नोपलः ॥ ७३ ॥ पाथःपूरे सुखं तस्थुः । कोमलत्वेन वेतसाः ॥ मूलादुन्मूलिता वृक्षाः । कठोरत्वेन तीरगाः ॥ ७४ ॥ मुंच मुंच व्रतं तीव्रं । त्वयोक्तमिति नोचितं ॥ प्रतिपन्नं यतः संतो । न त्यजंति मृतावपि ॥ ७५ ॥ यतः—

मूर्खो वरं दुश्चरितो न विद्वान् । वरं गृहस्थो न यतिः कुशीलः ॥ निःस्वो वरं नो धनवानदाता । क्लीबो वरं स्वीकृतभुग् न शस्तः ॥ ७६ ॥ जइ चलइ मंदरो सुमेरं । सायरोल्लसइ सयलदिलिचक्कं ॥ तहवि हु सत्पुरिसाणं । पयंपिअं नान्नहा होइ ॥ ७७ ॥ प्रतिपन्नानि

द्दार न ॥ ५७ ॥ प्रतिक्षणं प्रक्षिपंती । कटाक्षान् विशिखानिव ॥ पुष्णंती प्रचुरस्नेहं । निः-
स्नेहेऽपि महामुनौ ॥ ५८ ॥ विलासान् हावज्ञावादीन् । सा ततान तथा यथा ॥ दृषन्मयो-
ऽपि इवति । पुत्रकः केऽपरे नराः ॥ ५९ ॥ परमध्युष्टकोटीनां । रोम्णामस्य महामुनेः ॥
नैकमप्यचलद्रोम । पश्याहो दार्ढ्यमद्भुतं ॥ ६० ॥ अथ सा स्नेहला स्माह । शृणु स्वामिन्
वचो मम ॥ तपस्या जगृहे केन । हेतुना क्लेशकारिणी ॥ ६१ ॥ क्वेदं तव वपुर्देव । ललत्क-
मलकोमलं ॥ कठोरकायसंसाध्यं । क्वेदं कष्टकरं व्रतं ॥ ६२ ॥ अञ्जनालैर्द्विपालानं । कवचं
केतकीदलैः ॥ नौपट्टो नेत्रवस्त्रैर्वा । सुदृढैरपि किं ज्ञवेत् ॥६३॥ एवं तव शरीरेण । कोमलेन
सिरीसवत् ॥ कथं हि शक्यते कर्त्तुं । दुर्धरव्रतधारणं ॥ ६४ ॥ तदेनं मुंच मुंचाशु । ज्ञज
ज्ञोगज्ञरं निजं ॥ पश्यंत्या अपि कष्टं ते । हृदयं ज्ञावि मे द्विधा ॥ ६५ ॥ जल्पंतीमिति तां
ज्ञात्वा । साधुः कामातुरां ज्ञृशं ॥ मौनमेव व्यधाद्यस्य । पुरः किंचिद्गुणाय न ॥ ६६ ॥ नां-
वुपूरे प्रविष्टव्यं । वक्तव्यं न रुषां ज्ञरे ॥ ज्वरादौ नौषधं देयं । नीतिरेषा विपश्चितां ॥ ६७ ॥
क्षणात्प्रशांतकामा सा । जगाद पुनरप्यमुं ॥ अन्यदूरेऽस्तु तत्सर्वं । नार्हा किं वक्तुम-

वसिष्ठोऽपि सुतस्नेहा–न्निमग्नः शोककर्दमे ॥ गौतमोऽप्याप न ज्ञानं । वीरस्नेहविशेषतः ॥ ८८ ॥ छेदनं मर्दनं वेधं । शोषं निःपीलनं तथा ॥ तिलोऽपि लभते स्नेहात् । स स्नेहस्त्यजनोचितः ॥ ८९ ॥ स्नेहः स्तोकोऽपि जीवानां । यावत्तावन्न निर्वृतिः ॥ पश्य स्नेहक्षयादेव । दीपः प्राप्नोति निर्वृतिं ॥ ९० ॥ अथवा—यत्र स्नेहो भयं तत्र । स्नेहः शोकस्य कारणं ॥ स्नेहमूलानि दुःखानि । तस्मिंस्त्यक्ते परं सुखं ॥ ९१ ॥ श्रीमन्नेमिकुमारेण । नवजन्मार्जितोऽपि हि ॥ राजीमत्या महास्नेह–स्त्यक्तः सर्वसुखार्थिना ॥ ९२ ॥ तथा मयाप्यसौ मुग्धे । मुक्तो मुक्तिसुखाशया ॥ वृद्धानुगा यतः संतो । न दुष्या विदुषामपि ॥ ९३ ॥ भूयो जगाद सा कोशा । प्रतिज्ञाजरज्ञासुरा ॥ नाथ नीतिज्ञ वाक्यं मे । पुनः करणांतरे कुरु ॥ ९४ ॥ बह्वर्थे त्यज्यते स्तोकं । नीतिरेषास्ति विश्रुता ॥ स्तोकार्थे यत्पुनर्भूरि । त्यक्तवान्न तन्न सांप्रतं ॥ ९५ ॥ यस्माद्गृहाश्रमादन्यो । रम्यो धर्मोऽस्ति नो भुवि ॥ यत्र प्रदीयते दानं । दीनानाथादिदेहिनां ॥ ९६ ॥ स्वर्गे सुखं न धर्मोऽस्ति । व्रते धर्मोऽस्ति नो सुखं ॥ तद्द्वयं गृहवासेऽस्ति । तत्यक्त्वा किं व्रते स्थितः ॥ ९७ ॥

महतां । युगांतेपि चलंति न ॥ अगस्तिवचनैर्बद्धो । विंध्योऽद्यापि न वर्द्धते ॥ ७८ ॥ एकांतेऽप्याहृतं यत्स्यात् । सतां तदपि दुस्त्यजं ॥ किं पुनः सर्वसिद्धादि—साक्षिकं स्वीकृतं व्रतं ॥ ॥ ७९ ॥ तदेतन्नैव मुंचामि । प्राणांतेऽपि निजाहृतं ॥ न निंबमपि मुच्येत । किं पुनः श्रेय ईदृशं ॥ ८० ॥ यतः—सकृदपि यत्प्रतिपन्नं । कथमपि तन्न त्यजंति सत्पुरुषाः ॥ नेंदुस्त्यजति कलंकं । नोज्झति वडवानलं सिंधुः ॥ ८१ ॥ अथ साऽचिंतयच्चित्ते । यदेषोऽवग् वरं हि तत् ॥ वदतः स्यात्प्रतीकारो । मौनदंभो हि दुस्तरः ॥ ८२ ॥

एवं विचिंत्य चतुरा । जगाद पुनरप्यमुं ॥ चिररूढं प्रभो प्रौढं । स्नेहं त्वं त्यक्तवान् कथं ॥ ८३ ॥ मुनिः प्राह प्रगल्भे त्वं । वाढं विज्ञापि वेत्सि नो ॥ दुःखानां कारणं यस्तु । स स्नेहः क्रियते कथं ॥ ८४ ॥ यस्माद्व्यालाः करालास्ते । बध्यंते बंधनैर्भृशं ॥ वाढं मूढो नरो येन । स्वकाये कृमितां व्रजेत् ॥ ८५ ॥ भूषणोद्यानवाप्यादौ । मोहितास्त्रिदशा अपि ॥ मृत्वा तत्रैव जायंते । पृथ्वीकायादियोनिषु ॥ ८६ ॥ गेहस्नेहनिबद्धात्मा । श्रेष्ठी तापसनामकः ॥ शूकरोरगतां व्रजे । धिगहो स्नेहचेष्टितं ॥ ८७ ॥

। नमिवत्सर्वदा सुखी ॥ ८ ॥ बहूनां कलहो नित्यं । द्वाभ्यां संघर्षणं भवेत् ॥ एकाकी विचरिष्यामि । कुमारीवलयं यथा ॥ ९ ॥ तस्माद्विचारचतुरे । विचार्यैवं चिरं मया ॥ शर्म धर्ममयं मत्वा । व्रतमेवेदमादृतं ॥ १० ॥ यतः—न च राजभयं न च चौरभय–मिहलोकसुखं परलोकहितं ॥ नरदेवनतं वरकीर्त्तिकरं । श्रमणत्वमिदं रमणीयतरं ॥ ११ ॥ नैवास्ति राजराजस्य । तत्सुखं नैव देवराजस्य ॥ यत्सुखमिहैव साधो–र्लोकव्यापाररहितस्य ॥१२॥ साधूनां चरितं प्रोक्तं । विशोपा विंशतिर्जिनैः ॥ श्राद्धानां तु सपादोऽसौ । तत् कथं संश्रयेऽल्पकं ॥ १३ ॥

मेरुसर्षपमादृक्षं । साधुश्रावकयोर्विदन् ॥ श्राद्धधर्मं समारब्धुं । न श्रद्धामपि संदधे ॥ ॥ १४ ॥ श्राद्धः शुद्धोऽपि सिद्धांते । तप्तायोगोलसन्निभः ॥ भाषितः श्रीजिनैस्तेन । न श्राद्धत्वं स्पृहापि मे ॥ १५ ॥ एवं तस्य वचः श्रुत्वा । सा प्राप्तप्रतिभा पुनः ॥ जगाद जगदानंद । श्रव्यं मे श्रूयतां वचः ॥ १६ ॥ नाकिनोऽपि निवृत्त्यर्थं । नारीं चेन्निकटेऽनिशं ॥ श्रयंति शमिनोऽप्येवं । तर्हि केऽन्ये नरादयः ॥ १७ ॥ यथा—गौरी रुद्रस्य विष्णोः श्रीः । सावि-

श्रुत्वेति वचनं तस्या । युक्तियुक्तमसौ मुनिः ॥ विस्मितः पुनरप्यूचे । प्रत्युत्तरमनुत्तरं ॥ ९८ ॥ यदूचे गेहवासान्नो । धर्मोऽन्योऽस्तीति तन्मृषा ॥ यत्तत्र क्षणिकत्वेन । धर्मोऽल्पो मरुचारिवत् ॥ ९९ ॥ पातकं प्रचुरं तत्र । त्रिकालप्राप्तियोगतः ॥ प्राप्यते लवणांभोधौ । क्षारपानीयवत्सदा ॥ १०० ॥ तस्माद्गृहाश्रमे मुग्धे । पापव्यापमये वयं ॥ स्थातुं नाल्पमपीच्छामो । हंसवरचाविले जले ॥ १ ॥ नानाशाप्रसरस्त्रोत्र—परिग्रहपरिच्छदैः ॥ गेहिनां गेहवासेऽपि । सौख्यं स्वप्नेऽपि नो भवेत् ॥ २ ॥ आशा हि परमं दुःख—माशानाशो महासुखं ॥ ॥ आशापाशं परिछेद्य । सुखं सुष्वाप पिंगला ॥ ३ ॥ यथा जलौघैर्जलधि—रतृप्तश्चाग्निरिंधनैः ॥ तथा लोभाद्धनैर्द्रव्यै—रतृप्तो दुःखभाग् गृही ॥ ४ ॥ यतः—

तृप्तो न पुत्रैः सगरः । कुचिकर्णो न गोधनैः ॥ न धान्यैस्तिलकः श्रेष्ठी । न नंदः कनकोत्करैः ॥ ५ ॥ सामिषः कुररो बाढं । बाध्यतेऽन्यैः खगैर्यथा ॥ परित्यक्तामिषः सोऽपि । कुररः सुखमश्नुते ॥ ६ ॥ एवं धनधनो गेही । पीड्यते राजदस्युभिः ॥ परिग्रहपरित्यागात् । स स्यात्सर्वसुखास्पदं ॥ ७ ॥ गते हृते मृते शोकः । परिच्छदवतो भवेत् ॥ परिच्छदपरित्यागी

न्नमः ॥ प्रतिश्रोतोगमिकृष्ण—चित्रकः किं कचिन्नवेत् ॥ २८ ॥ ध्रियते यन्निवृत्त्यर्थं । नारीति गदितं त्वया ॥ तन्न सत्यं यतस्तस्यां । सत्यां सौख्यं कुतो नृणां ॥ २९ ॥ जातेति श्रुतमात्रापि । विवाहार्हा विशेषतः ॥ विधवा वानपत्यापि । कन्या पित्रोः सदार्तिदा ॥ ३० ॥ यत्नापि रमयत्येषा । रमणी भणिता ततः ॥ आच्छादयेच्च यद्दोपै—स्ततः स्त्री कथ्यते बुधैः ॥ ॥३१॥ यतो मारयति क्षोणौ । कुमारी गदिता ततः ॥ अबलान् कुरुते लोकान् । येन तेनोच्यतेऽबला ॥ ३२ ॥ दोषान्निजान्निजाह्वानै—रित्याद्यैर्वक्ति या स्फुटं ॥ नारी नागीव नियतं । निधनाय नृणामसौ ॥ ३३ ॥ बंधूनां स्नेहवद्धानां । विना नारीं न विच्युतिः ॥ तालकस्य द्विधा बंधं । यत्कुर्यात्कुंचिका क्षणात् ॥ ३४ ॥ स्नेहो हल्लविहल्लाभ्यां । कोणिकस्य महानभून् ॥ पद्मावत्याः प्रपंचेन । पंचत्वं प्राप तत्क्षणात् ॥ ३५ ॥ चंद्रलेखेव वक्रा स्त्री । मदिरेव विमोहिका ॥ विद्युल्लतेव चपला । निम्नगेवातिनीचगा ॥३६॥ स्वगेहशोपिकान्यौको—द्भूपिका दोषमंदिरं ॥ कलेर्मूलं कलंकाना—मालयो महिला मता ॥ ३७ ॥ मुख्या यत्राबला बालो । राजा मंत्री निरक्षरः ॥ तत्र देशे न वास्तव्यं । नीतिरप्येतदूचुषी ॥ ३८ ॥

त्री ब्रह्मणस्तथा ॥ वह्नेः स्वाहा शचींद्रस्य । रोहिणी रजनीपतेः ॥ १८ ॥ रत्नादेवी रवेस्ता-
रा । गीःपतेः श्रीभुवो रतिः ॥ श्राद्धदेवस्य धूमोर्णा । प्रियाः स्युरिति नाकिनां ॥ १९ ॥ अ-
रुंधती वशिष्ठस्य । यमदग्नेस्तु रेणुका ॥ अहल्या गौतमस्येति । भार्याः स्युर्यमिनामपि ॥
॥ २० ॥ तदा स्वामिन्मम त्यागं । गतराग करोपि किं ॥ विगायत्यत्र लोकोऽपि । येनाचा-
रमुचं जनं ॥ २१ ॥ अथ श्रीस्थूलभद्रोऽपि । जगद्भद्रंकरः पुनः ॥ प्रबोधवंधुरो वाच-मुवा-
च चतुराशयः ॥ २२ ॥

दयिताः संति देवानां । मुनीनां महिलास्तथा ॥ भवत्या यद्वचोऽवादि । तन्मे नाह्लादि वाग्मिनि ॥ २३ ॥ तथा देवमहर्षीणां । सदृशामपि नामतः ॥ क्रियाफलविभागेन । दृश्य-
ते महदंतरं ॥ २४ ॥ वाजिवारणलोहानां । काष्टपाषाणवाससां ॥ वस्तूनां सदृशां नाम्ना ।
यथा स्यान्महदंतरं ॥ २५ ॥ लौकिकास्ते त्वया प्रोक्ता । ये देवा दयिताप्रियाः ॥ महिला-
ग्रहिला ये तु । मुनयस्तेऽपि तादृशाः ॥ २६ ॥ वयं लोकोत्तराचार-चतुरा देवर्षिभिस्तु तैः
॥ वाढं विसदृशैर्भद्रे । भवामः सदृशाः कथं ॥ २७ ॥ अनुश्रोतःसरित्काष्ट-तृणपत्रादिभिः

न्द्रो मर्मज्ञापकः ॥ ४९ ॥ नारी यत्कुरुतेऽनर्थं । नाऽरी रोपन्नृतोऽपि तत् ॥ इति ज्ञात्वा म-
या त्यक्ता । रक्तापि न्नवती नृशं ॥ ५० ॥ श्रुत्वेति वचनं तस्य । श्रितमौनापि सा पुनः ॥
श्रवादीद्विकटा वेश्या । कोशा तं मुनिपुंगवं ॥ ५१ ॥ स्वामिन् स्वयं नयं यो न । वेत्ति सो-
ऽन्यं तु पृच्छति ॥ अतस्त्वं पृच्छ्यमे देव । वद विज्ञोऽसि धीनिधे ॥ ५२ ॥ दयामूलो जिना-
धीशै–र्धर्मः सम्यगुदाहृतः ॥ परपीडामकृत्वैवा–राध्यते स तु निर्मलः ॥ ५३ ॥ तमाराद्धुम-
नाः स्वामिन् । स्वयं सर्वात्मना सदा ॥ सम्यग्मनोवचःकायैः । परपीडां विमुंचसि ॥५४॥
निजात्मनः पुनः पीडां । तपोभिर्दुस्तपैरिह ॥ यत्त्वं करोपि तत्केयं । परस्परविरोधिता ।५५।
राज्ञि रंके च पीडेयं । समैवेत्यवदन् जिनाः ॥ कुर्वन्निजात्मनः पीडां । तत्ते का विद्व-
पी विज्ञो ॥ ५६ ॥ इति तद्वाक्यमाकर्ण्य । सकर्णः सोऽवदन्मुनिः ॥ साधु साधूदितं विज्ञे ।
विशेषं वेत्सि नो पुनः ॥ ५७ ॥ परपीडा यथा नार्हा । स्वपीडापि तथांगिनां ॥ किंतु क्वा-
पि स्वपीडेयं । कारणात्क्रियते बुधैः ॥ ५८ ॥ यथा मलीमसं वासः । कृत्वा क्षारादिमिश्रि-
तं ॥ आस्फाल्यते शिलापृष्टे । शुद्ध्यर्थं धनिकैरपि ॥ ५९ ॥ यथा रोगातुरो वैद्यै–श्छेददाहा-

नारीरंगो नृणां प्रायो । गर्भवासप्रसंगदः ॥ द्वेधापि निवृतेर्हंता । तदंगो नोचितस्ततः ॥ ॥ ३९ ॥ रोलिता राज्यभ्राजोऽपि । वंचिताश्चतुरा अपि ॥ खंडिताः पंडिताः सर्वे । यया स्त्री सातिदुःखदा ॥ ४० ॥ लोकेऽपि श्रूयते नार्या । नर्त्तितोऽसौ महेश्वरः ॥ ब्रह्मा चतुर्मुखश्चक्रे । सहस्राक्षश्च देवराट् ॥ ४१ ॥ प्रद्योतो बंधनैर्बद्धो । विक्रमश्च विगोपितः ॥ इलापुत्रोऽपि नटितो । नारीभिरिति विश्रुतं ॥ ४२ ॥ सुकुमालिकया देव्या । जितशत्रुर्महीपतिः ॥ प्राणप्रदोऽपि पापिन्या । सरित्पूरे प्रपातितः ॥ ४३ ॥ हढदेवीरतः पूर्वं । मालवानामधीश्वरः ॥ अश्रोतव्यां दशां लेभे । पृथ्वीचंद्रो विदेशगः ॥ ४४ ॥ प्रदेशी पृथिवीपालो । वल्लभासूर्यकांतया ॥ धवो धर्मी धरानाथो । मूढया हा हतस्तया ॥ ४५ ॥ एवं संख्यातिगाः के के । पुरुषाः प्राणसंशये ॥ पातिताः प्रमदाभिर्नो । ततस्ताः कः श्रयेत्सुधीः ॥ ४६ ॥

भवद्भर्तं भवद्भक्ता । एव भद्रे विदुर्जनाः ॥ यदुन्मत्तगुणं वेत्ति । रुद्र एवापरो न तु ॥ ॥ ४७ ॥ कृतपुण्यादयः पूर्वं । वंचिता विदुरा अपि ॥ भवतीभिरियं वार्त्ता । कस्य चित्रं करोति न ॥ ४८ ॥ तदलं वचसा येन । निषिद्धं मर्मभाषणं ॥ शस्त्रघातादपि प्रोक्तो । दुस्स-

ग्नाग् ॥ ३० ॥ एवं निराकृताप्येषा । प्रोवाच पुनरप्यमुं ॥ देव व्रतानि तीव्राणि । क्रियंते केन हेतुना ॥ ३१ ॥ सुखार्थं यदि तान्येवा–सानि भोज्यानि किं व्रतैः ॥ धान्यौघे गेहगे को हि । कृषिकर्मादि संश्रयेत् ॥ ३२ ॥ त्यक्त्वाप्तं शर्म योऽप्यन्य–त्सौख्याप्त्यै यतते नरः ॥ भ्रमेत तद्वनव्यूहे । घटस्फोटोपमं स्फुटं ॥ ३३ ॥ भ्रतोदरस्थपुत्राप्त्यै । कटीस्थतनयोज्झनं ॥ स्वप्नदृष्टसुखाद्यर्थं । प्रत्यक्षसुखमोचनं ॥ ३४ ॥ एवमाप्तं सुखं मुंचन् । त्वं नव्यसुखलिप्सया ॥ भ्रष्टतां गंता । प्राज्ञो जंबुकवद् ध्रुवं ॥ ३५ ॥ मांसं तटांते परिमुच्य जंबुको । मीनोपलंभाय लघु प्रधावति ॥ मीनो जलांतः प्रविवेश सत्वरं । मांसं च गृध्रो हरतिस्म तद्यथा ॥ ३६ ॥ हित्वैहिकं वैषयिकं सुखं तथा । येऽमुत्रसौख्यप्रसराय धाविताः ॥ ते वंचयंति स्वमहो सदोभय–भ्रष्टा नरास्तीव्रतपोव्रतादिना ॥ ३७ ॥

इति तद्वचनप्रीतो । वाचमूचे मुनीश्वरः ॥ दुःखागारेऽत्र संसारे । सुखांशोऽपि न विद्यते ॥ ३८ ॥ शैत्यं नैव यथा वह्नौ । शौच्यं नांत्यजपाटके ॥ नामृतं वा मुखे सार्पे । संसारे न सुखं तथा ॥ ३९ ॥ विषयात्सुखमित्येषा । भ्रांतिर्मूढात्मनां नृणां ॥ तृषार्त्तानां जलभ्रां-

र्भितापनैः ॥ लंघनैः कटुकक्वाथैः । पाटवार्थं चिकित्स्यते ॥ ६० ॥ यथांगमर्दकै राज्ञो–ऽतिप्रक्तैः स्वपदादिभिः ॥ समाध्यर्थं विधीयेत । सर्वांगोपांगमर्दनं ॥ ६१ ॥

तथा कर्ममलक्लिन्नो । जीवोऽयं सुविवेकिभिः ॥ तपोऽनलैस्ताप्यमानः । स्वर्णवच्छोध्यतेतरां ॥ ६२ ॥ यद्वा नैवात्मनः पीडा । क्रीमा किंतु सुखाप्तितः ॥ तद्दुःखमपि नोच्येत । यदंते स्यात्परं सुखं ॥६३॥ अथ किंचिद्विना दुःखं । सौख्यमप्याप्यते न हि ॥ सुशिक्षितो हि तनयः । सुखश्रेणिं समाश्रयेत् ॥ ६४ ॥ कर्णौ विन्नूपणं विद्ध–श्छिन्नो वालक्तकं नखः ॥ तीक्ष्णैर्भिन्नः करः शोभां । दुःखादेते गुणास्पदं ॥ ६५ ॥ एवं यदिह लोकेऽपि । दुःखं सोढं सुखावहं ॥ तज्जिनोक्तैः पुनः सोढं । कथं नानंतसौख्यकृत् ॥ ६६ ॥ यथा च स्कंदकाचार्यशिष्याः पंचशतीमिताः ॥ यंत्रोत्थदुःखसहना–ल्लेभिरे कुर्वन्नं सुखं ॥ ६७ ॥ अवंतिसुकुमालोऽपि । त्रियामोत्पन्नकष्टतः ॥ विमानं नलिनीगुल्मा–भिधं साधितवान् सुधीः ॥६८॥ सुकोशलोऽपि सुमुनि–र्व्याघ्रीग्रस्तवपुस्तदा ॥ हेलया कलयामास । दुःखतो हि महासुखं ॥६९॥

यथा मातृग्जनोऽप्येष । सर्वज्ञोपज्ञवाक्यतः ॥ सहमानस्तपःकष्टं । कथं नानंतसौख्य-

स्य तृणं नारी । निगी । निरीहस्य तृणं नृपः ॥ ९० ॥ भूयो जगाद सा स्वामिन् । शृणु सत्यं वचो मम ॥ प्रस्तावे विहितं कार्यं । सर्वं संजायते शुभं ॥ ९१ ॥ फलंत्यवसरे वृक्षा । विनापि जलसेचनं ॥ वारिदा अप्यनाहूता । वर्षंति वसुधातले ॥ ९२ ॥ तपस्यापि तथा काले । कलिता फलदा भवेत ॥ यतो नीतौ बुधैः प्रोक्ताः । पुमर्थावसरा इति ॥ ९३ ॥

वयस्याद्ये वरां विद्यां । द्वितीये संभृतं सुखं ॥ तृतीये वंधुरं धर्मं । सुधीः संभावयेत्क्रमात् ॥ ९४ ॥ तत्क्रमत्यागतः शर्म-स्थाने धर्मं करोषि किं ॥ यतो वैकालिकं विद्धि । मध्यकाले न शोभते ॥ ९५ ॥ एवमुक्तस्तया साधु-र्ज्ञात तद्धृदयाशयः ॥ अवोचद्वचनं चारु । चंदनस्यदशीतलं ॥ ९६ ॥ क्रमस्तत्रेक्ष्यते भद्रे । यत्र स्यात्क्रमसंक्रमः ॥ क्षणिके जीवितव्ये तु । क्रमाक्रमकथा वृथा ॥ ९७ ॥ शेषकार्येष्वपि प्रायो । विलंबो हानिकृन्मतः ॥ ततः प्रसि-द्धमेवैत-द्धर्मस्य त्वरिता गतिः ॥ ९८ ॥ पुरा श्रीबाहुबलिना । भगवानादिमो जिनः ॥ चतुर्यामविलंबेन । नावंदि धिगिमं ततः ॥ ९९ ॥ यदहं वेद्मि तन्नैव । वेद्मीति यद्वचः पुरा ॥ अतिमुक्तमुनिप्रोक्तं । दत्ते बोधं न कस्य तत् ॥ ४०० ॥ इतो मृत्युरितो व्याधि-रितो विपदि-

ति–मृगतृष्णासु किं न हि ॥ ७० ॥ अथवा सौख्यमेवेदं । न स्यान्नीतिरियं यतः ॥ तत्सुखं लभ्यते नैव । यदंते दुःखसंगमः ॥ ७१ ॥ ताम्रस्वर्णाभरणाभं । गुडलिप्तदृषत्समं ॥ मधुबिंदूपमं वापि । सुखं विषयसंभवं ॥ ७२ ॥ दुःखं मेरूपमं यत्र । सुखं सर्षपसन्निभं ॥ विषयास्ते सुखं प्रोक्ता । लोकैर्निंदितदीपवत् ॥ ७३ ॥ श्वाऽस्थि शुष्कं मुखे लात्वा । क्षिप्त्वा पादद्वयांतरे ॥ लिहन् लालां निजां मूढो । मन्यते रसनिर्गमं ॥ ७४ ॥ एवं कामातुरः प्राणी । स्वशोपं पोपसन्निभं ॥ मन्यमानो महामोह–ललितं धिगिदं नृणां ॥ ७५ ॥ येऽन्यः क्षयादयो रोगाः । श्वादेः साधारणाश्च ये ॥ न तृप्तो जायते यस्तु । जंतुरंगारकृद्यथा ॥७६॥ यतः––असुरसुरपतीनां यो न भोगेषु तृप्तः । कथमिह मनुजानां तस्य भोगेषु तृप्तिः ॥ जलनिधिजलपानाद्यो न जातो वितृष्ण–स्तृणशिखरगतांभःपानतः किं स तृप्येत् ॥ ७७ ॥

इत्येतान् विषयान् दुःख–रूपान् संकल्पनासुखान् ॥ परित्यज्य परब्रह्म–सुखास्वादे रतिं कुरु ॥ ७८ ॥ अविदितपरमानंदो । वदति जनो विषय एव रमणीयः ॥ तिलतैलमेव मिष्टं । येन न दृष्टं घृतं क्वापि ॥ ७९ ॥ तृणं ब्रह्मविदां स्वर्ग–स्तृणं शूरस्य जीवितं ॥ विरक्त-

अथ श्रीस्थूलभद्रोऽपि । प्रोवाच वचनं शुचि ॥ शृणु प्रत्युत्तरं भद्रे । भद्रलंभारसंभृतं ॥ ११ ॥ पृष्ट्वा ग्रामांतरे गम्य-मिति नैकांतिका स्थितिः ॥ पृष्ट्वापि गम्यते क्वापि । क्वाप्यपृष्ट्वैव कारणात् ॥ १२ ॥ यथा स्वकार्यसिद्ध्यर्थं । कुमाराः श्रेणिकादयः ॥ स्वजायादीननापृच्छ्य । ययुर्लोक इति श्रुतिः ॥ १३ ॥ तथा माहृग्जनोऽप्येव । निजकार्यैकसिद्धये ॥ यद्गतावाददे तत्ते । नोपालंभोचितः स्फुटं ॥ १४ ॥ अथवा यो हितोऽत्यंतं । यस्यात्मीयो भृशं भवेत् ॥ स एव पृच्छ्यते कार्य-पृच्छार्होऽपि परो न हि ॥ १५ ॥ स्वकार्यतत्परे लोके । परकार्यपराङ्मुखे ॥ अयं मे हितकारीति । चिंत्यमानोऽपि नाप्यते ॥ १६ ॥ यतः—वृक्षं क्षीणफलं त्यजंति विहगाः शुष्कं सरः सारसाः । पुष्पं पर्युषितं त्यजंति मधुपा दग्धं वनांतं मृगाः ॥ निर्द्रव्यं पुरुषं त्यजंति गणिका भ्रष्टं नृपं सेवकाः । सर्वः स्वार्थवशाज्जनोऽभिरमते नो कस्य को वल्लभः ॥ १७ ॥ अपि च—न गांगं गांगेयं सुयुवतिकपोलस्थलगतं । न वा शुक्तिं मुक्तामणिरुरसिजास्वादरसिकः ॥ न कोटीरारूढः स्मरति च सवित्रीं मणिचय-स्ततो मन्ये लोकः स्वसुखनिरतः स्नेहविरतः ॥ १८ ॥ आत्मीयोऽपि जनः कोऽपि । जगत्यत्र न दृ-

तो जरा ॥ चतुरंगा जनं यत्रा—ऽनित्यता हंति निर्भरं ॥ १ ॥ तस्मिन्नसारे संसारे । सततं व- सतां सतां ॥ धर्मः क्रमागतः कार्यः । श्रद्धामिति करोति कः ॥ २ ॥

नित्यायुष्का ज्ञानिनोऽपि । ध्रुवंज्ञाविशिवा जिनाः ॥ धर्मं च न प्रमाद्यंति । तत्कथं माद्दशोऽलसः ॥ ३ ॥ प्राज्यराज्यं यथा प्राप्य । रंकः स्याद्भृशमुत्सुकः ॥ धर्मयोगं तथा ल- ब्ध्वा । न विलंबेत धीधनः ॥ ४ ॥ यतः—श्वःकार्यमद्य कुर्वीत । पूर्वाह्णे चापराह्णिकं ॥ मृ- त्युर्न हि प्रतीक्षेत । कृतं वास्य न वा कृतं ॥ ५ ॥ पुनः कोशा गतावेशा । शोकावेशविसं- स्थुला ॥ निःश्वस्य पुरतः साधो—र्वाक्यमेवमवोचत ॥ ६ ॥ नाथ किं क्रियते किं वा । चिं- त्यते किं च जल्प्यते ॥ त्वादृशा अपि संतश्चे—ज्जाताः सन्मार्गलोपकाः ॥ ७ ॥ प्रायः प्राघू- र्णकोऽप्येकं । वासरं यत्र संवसेत् ॥ तमनापृच्छ्य नो याति । लोकस्थितिरियं यतः ॥ ८ ॥ द्वादशाब्दीं प्रभो यत्र । भुक्तः सुप्तस्तथा स्थितः ॥ अनापृच्छ्य प्रभो तां मा—मपि त्वं यात- वान् कथं ॥ ९ ॥ अथ नो तव दोषोऽयं । दोषो मत्पूर्वकर्मणां ॥ यद्दृशस्त्वादृशोऽप्यासी— ज्ञा जनाचारमोचकः ॥ १० ॥


॥ ४० ॥

भद्रमा कथं ॥ २९ ॥ अथ प्रोवाच वचनं । वाचंयमशिरोमणिः ॥ आवयोरैक्यमित्यूचे । भ-
वत्या तन्न तात्त्विकं ॥ ३० ॥ यतो जातिप्रभृतिभिः । प्रकारैरैक्यमावयोः ॥ नूनं नास्त्येव य-
द्यस्ति । संशयः श्रूयतां ततः ॥ ३१ ॥ त्वं तादृग्जातिसंभूता । विप्रजातिभवस्त्वहं ॥ एवं जा-
तिविभेदेना-वयोरैक्यं न जायते ॥ ३२ ॥ भवत्याकारतो नारी । पुरुषाकारभृत्त्वहं ॥ एव-
माकारतोऽप्येव । विभेदो नौ भवेद्भृशं ॥ ३३ ॥ नाम्ना त्वमसि कोशेति । स्थूलभद्रस्त्वहं पु-
नः ॥ नामस्थानभवोऽप्येव । विभेदो नावयोः किमु ॥ ३४ ॥ त्वं निजाचारचतुरा । यत्या-
चाररतस्त्वहं ॥ ऐक्यमाचरतोऽप्येवं । समुत्पद्येत नौ कथं ॥ ३५ ॥ इत्याद्यनेकधाभेदैः । पा-
र्थक्ये प्रकटे सति ॥ कथंकारं वदेदैक्यं । भवती मोहमोहिता ॥ ३६ ॥ अथवा गाढमप्यैक्यं
। कयोश्चिद्वस्तुनोर्भवेत ॥ कस्यचिद्वस्तुनो योगा-द्विभेदो भवति क्षणात् ॥ ३७ ॥ स्वर्णपा-
रदयोर्यद्व-द्गाढमैक्यं कृतं भवेत् ॥ ज्वलज्ज्वलनसंपर्का-द्विभेदो भवति द्रुतं ॥ ३८ ॥ यद्व-
दैक्यं क्वचित्पात्रे । कृतं स्यात्क्षीरनीरयोः ॥ राजहंसरसज्ञातो । स्यात्पार्थक्यमाश्रयेत् ॥३९॥
प्रभूतकालतो भूत-मैक्यं स्यान्मलवस्त्रयोः ॥ जलप्रक्षालनायोगा-द्भृशं पार्थक्यमश्नुते ॥४०॥

ष्यते ॥ यद्यात्मीयो भवेत्तर्हि । त्यक्त्वात्मीयं व्रजेन्न हि ॥ १९ ॥

विघटंते सुताः प्रायो । विघटंते च बांधवाः ॥ सर्वं विघटते विश्वं । धर्मात्मानौ तु निश्चलौ ॥ २० ॥ आत्मा दुःप्रस्थितो वैरी । मित्रं सुप्रस्थितः पुनः ॥ इत्यर्द्धवाक्यतः स्वीयात्मायं मे हितकृन्मतः ॥ २१ ॥ इति युक्तिद्वयादेव । पृष्टव्यः स्यान्निजात्मकः ॥ स च प्रागेव पृष्टोऽस्ति । भद्र भद्रंकरो भृशं ॥ २२ ॥ अथ च—श्रेयांसि बहुविघ्नानि । अवधार्य जनोदितं ॥ पृच्छादिना निजार्थस्य । विनाशं विदधीत कः ॥ २३ ॥ गौतमादिवरैर्विप्रै—स्तपस्या जगृहे यदा ॥ तदा न तैर्निजाः पृष्टाः । स्वार्थभ्रंशो हि मूर्खता ॥ २४ ॥ तथा चार्द्रकुमारेण । स्वराज्यादि व्रतेच्छुना ॥ ताताद्यप्रश्नतो भुक्त—महो सच्चरितं शुचि ॥ २५ ॥ सनत्कुमारसदृशाः । संतः संख्यातिगाः पुरा ॥ स्वार्थमप्रश्नतश्चक्रु—रहो गांभीर्यमद्भुतं ॥ २६ ॥ इत्येतदनुसारेण । मयापि भवतीमुखान् ॥ अपृष्ट्वैवाददे दीक्षा । दुस्त्यजो हि निजक्रमः ॥ २७ ॥

एवं निरुत्तरीभाव—गमिताप्युक्तियुक्तिभिः ॥ दुस्त्यजाशावशादेपा । पुनः प्रोवाच धीमती ॥ २८ ॥ त्वदीयाहं मदीयस्त्व—मावयोरैक्यमित्यभूत् ॥ तत्त्यक्त्वा नाथ पार्थक्य—माददे

यथा जलं तृषाक्रांतः । क्षुधितश्च सुभोजनं ॥ ५० ॥ अजिह्मब्रह्मवानेष । मम स्वामीत्यतः स्वयं ॥ राजदत्तं नरं मुक्त्वा । ब्रह्मव्रतमुपाददे ॥ ५१ ॥

धन्यंमन्या प्रणम्याथ । मुनीनामीशमादरात् ॥ एवं प्राज्यप्रमोदेन । प्रशशंस मनस्विनी ॥ ५२ ॥ स्वामिन् शाम्यसुधांभोधि–मध्यमज्जनलालस ॥ सदा शांतरसास्वाद–कृताह्लाद चिरं जय ॥ ५३ ॥ जय त्रिजगतीवीर । जय धीर शिरोमणे ॥ जय नीरधिगंभीर । जय संसारपारग ॥ ५४ ॥ अभिरामगुणग्राम । भुवनैकविभूषण ॥ जय जंगमतीर्थाभ । विगताशेषदूषण ॥ ५५ ॥ श्रेयस्वी नाथ नेशाच्च । वचस्वी नैव वाक्पतेः ॥ तरणेर्नास्ति तेजस्वी । तपस्वी त्वत्परो न तु ॥ ५६ ॥ योगिनां परमो योगी । मुनीनां परमो मुनिः ॥ ज्ञानिनां परमो ज्ञानी । त्वं तादृग्योगयोगतः ॥ ५७ ॥ शूराः सहस्रशो विश्वे । लक्ष्मीशा लक्षशोऽपि च ॥ कोटिशोऽपि क्रियानिष्टा–स्त्वादृशा नेश योगिनः ॥ ५८ ॥ त्वत्तुल्यो नाथ विश्वेऽपि । मुनिर्मथितमन्मथः ॥ न दृष्टो न श्रुतः क्वापि । न भूतो न भविष्यति ॥ ५९ ॥

लोहं सिद्धरसस्पर्शा–द्यथा कनकतां व्रजेत् ॥ चारु चंदनगंधाद्वा । मलेडीत्वं वदर्यपि

तथा स्नेहवशादेव–मावयोरप्यनूत्कियत् ॥ सम्यग्ज्ञानसमायोगा–दद्य भेदोऽत्रवभृशं ॥ ४१ ॥ अस्मिन्नपारे संसारे । भ्रमतां भविनां भृशं ॥ सर्वप्राणिषु संबंधा–त्सर्वे संबंधिनोऽगिनः ॥ ४२ ॥ मातृपितृसहस्राणि । पुत्रदारशतानि च ॥ युगे युगे व्यतीतानि । कस्य ते कस्य वा वयं ॥ ४३ ॥ एवं विसंस्थुलां विश्व–स्थितिं विज्ञाय कोविदे ॥ ममतां दुःखदां मुक्त्वा । समतां सुखदां श्रय ॥ ४४ ॥ अमानममतादोष–दुःखिता दुःखभाजनं ॥ अस्मिन् भवेऽपि संजाता । मानवा मम्मणादयः ॥ ४४ ॥ पृथ्वीचंद्रादयः पूर्वं । समतासंगशालिनः ॥ गृहवासजुषोऽप्यापुः । केवलज्ञानमुज्ज्वलं ॥ ४५ ॥

एवमुक्त्वा मुनींद्रेण । प्रबुद्धा मुदितानना ॥ प्रोवाच वचनं कोशा । प्रणम्येति महामुनिं ॥ ४६ ॥ यासां पाटकपार्श्वेऽपि । यतयो यांति नो मुने ॥ त्वं तासां यद्गृहेष्वस्था–स्तद्धिताय ध्रुवं मम ॥ ४७ ॥ तत्प्रसीद प्रभो देहि । धर्मं सम्यग्यथोचितं ॥ यद्भंत्यया याचिताः संतः । किं पुनर्याचिता जनैः ॥ ४८ ॥ योग्यतामथ विज्ञाय । स्थूलभद्रो महामुनिः ॥ श्राद्धधर्ममुपादिक्षत् । सर्वशर्मनिबंधनं ॥ ४९ ॥ तं श्रुत्वा श्रद्धया श्राद्ध–धर्मं जग्राह सा तथा ॥

स्ते । तयोऽपि मुनिपुंगवाः ॥ संपूर्य चतुरो मासा–नाययुर्गुरुसन्निधौ ॥ ७१ ॥ साधूंस्ताना-
गतान्‌ वीक्ष्य । छारदेशे मुदा तदा ॥ स्वागतं वो गुरुः स्माह । हंहो दुष्करकारकाः ॥७२॥

अथ कोशां समापृच्छ्य । स्थूलभद्रोऽप्युपागतः ॥ सहसैव समुत्थाय । गुरुर्गुरुमुदावदत्
॥ ७३ ॥ अस्ति ते स्वागतं धीर । कृतदुष्करदुष्कर ॥ वरसंवरसंरुद्ध–दुर्द्धरस्मरतस्कर ॥७४॥
इति श्रुत्वा गुरोर्वाक्यं । सासूयास्ते तपस्विनः ॥ मिथोऽवोचन्नहो कीदृ–गनौचित्यं गुरोरपि
॥ ७५ ॥ आमात्यपुत्र इत्येवं । नाम्यन्नाजोऽपि सूरयः ॥ हाहामुं वहु मन्यंते । महत्त्वात्क-
स्य न प्रियः ॥ ७६ ॥ अथवा मुखमालोक्य । तिलकं कुर्वते जनाः ॥ यो वाग्युदेति लोकेऽ-
पि । वध्यते स च नापरः ॥ ७७ ॥ इति तत्वविदोऽप्येते । दधुर्मत्सरमुद्धुरं ॥ तडित्तापमिवां-
भोदा–द्दीप्रदीपादिवांजनं ॥ ७८ ॥ यस्माद्दोषाः प्रवर्द्धंते । रोगा इव कुपथ्यतः ॥ नश्यंति स-
द्गुणव्यूहा । महावातादिवांबुदाः ॥ ७९ ॥ विवेकः क्षीयते क्षिप्रं । दीपवत्सर्पदर्शनात् ॥ पु-
ण्यमुड्डीयते चोच्चैः । कृशानोरिव पारदः ॥ ८० ॥

सोऽपि संतापसंभार–कारको यदि मत्सरः ॥ दध्रे तैर्मुनिभिस्तेन । दुस्त्यजो मत्सरो

॥ ६० ॥ तथा संबंधतः सर्व—विरत्यभ्युद्यतस्य ते ॥ रतिर्देशविरत्यां मे । जाता संगाद्गुणा य-
तः ॥ ६१ ॥ त्वं मे स्वामी समस्तार्थ—सार्थदानात्पुराप्यभूः ॥ अधुना धर्मदानेन । जातो ध-
र्मगुरुः पुनः ॥ ६२ ॥ त्वया मे ददता धर्मं । दत्तास्त्रैलोक्यसंपदः ॥ तेन ते नाऽनृणाहं स्या—
मुपकारशतैरपि ॥ ६३ ॥ संसारेऽस्मिन् भवोऽपारे । मज्जंती मोहसागरे ॥ पुण्यपोतप्रदानेन
। भवताहं समुध्धृता ॥ ६४ ॥

स्वामिंस्ते गुणसंभारं । स्फारं वक्तुं यथास्थितं ॥ वाचामीशोऽपि चेन्नालं । तर्हि कोऽ-
न्ये तु मादृशाः ॥ ६५ ॥ यन्मोहमूढया पाप—परया वच्चनादिभिः ॥ कृतो ध्यानविघातस्ते ।
तत्क्षमस्व क्षमानिधे ॥ ६६ ॥ इत्याद्युक्त्वा निजाचारं । त्यक्त्वा सा विरतौ रता ॥ प्रशांत-
मानसा साधुं । सेवतेस्म दिवानिशं ॥ ६७ ॥ पूजयंती जिनाधीशं । पठंती श्रीजिनागमं ॥
स्मरंती श्रीनमस्कारं । सृजंती सुकृतक्रियां ॥ ६८ ॥ एवमेषातिचक्राम । वासरान् पुण्यभा-
सुरान् ॥ यतो भाग्यौघलभ्येऽर्थे । नालसा अप्युदासते ॥६९॥ साधुः श्रीस्थूलभद्रोऽपि । सं-
यमाराममसंस्थितः ॥ समग्रां गमयामास । चातुर्मासीं सदाधिया ॥ ७० ॥ अथ सिंहगुहाद-

न्येषां । किं पुनर्गुणशालिनां ॥ ९२ ॥ एवं स वार्यमाणोऽपि । जगाम जडधीर्द्रुतं ॥ उपदेशं न मन्यंते । प्रायो हि जडबुद्धयः ॥ ९३ ॥

तत्र प्राप्तेन तेनाथ । वसतिर्याचिता तदा ॥ तया सास्मै ददे सोऽपि । मुदितस्तत्र तस्थिवान् ॥ ९४ ॥ वीक्ष्य तस्या विलासादीन् । सोऽनुरक्तोऽभवत्क्षणात् ॥ आमो हि मृद्घटो वारि-वारं संसोढुमक्षमः ॥ ९५ ॥ निजां स्पर्धां स विस्मार्य । प्रार्थयामास तामथ ॥ मानिनामपि यन्मार-विकारो विषमः खलु ॥ ९६ ॥ सापि तं धीमती नैच्छत् । ज्ञाततत्वा जितेंद्रिया ॥ तत्प्रबोधकृते किंतु । भणतिस्मेति तं तदा ॥ ९७ ॥ धनवश्या ध्रुवं वेश्याः । स्यु-रिति त्वं न वेत्सि किं ॥ तासां कामोऽपि कुष्टी स्या-द्धनहीनोऽस्ति यो नरः ॥ ९८ ॥ अतस्त्वं विविधोपायैः । समर्जय धनं धनं ॥ सोचे च वेद्मि नोपायं ॥ साऽवक् तर्हि हितं शृणु ॥ ९९ ॥ दत्ते नेपालभूपालः । साधूनां रत्नकंबलं ॥ तं लात्वात्र समागछे-र्मयि चेदर्थवानसि ॥५००॥ तत् श्रुत्वा तत्तथा कर्तुं । प्रावृष्यपि चचाल सः ॥ यदिंद्रियैर्जितो जंतु-रकृत्यं कुरुते न किं ॥ १ ॥ यतः—अखाद्यमपि खादंति । अप्यपेयं पिबंति च ॥ अगम्यं चापि गछंति ।

ध्रुवं ॥ ८१ ॥ मुनी पीठमहापीठौ । प्रापितौ येन हीनतां ॥ सोऽपि प्रोच्चपदाप्त्यै तै–र्मत्सरः शिश्रिये जडैः ॥८२॥ यथावरः पशूनां स्या–द्ध्वंसी वेधश्च वाजिनां ॥ द्विपानां पालकः प्रोक्तै–र्गुणानां मत्सरस्तथा ॥ ८३ ॥ वरं ज्वालाकुले तीव्रे । ज्वलने ज्वालितं वपुः ॥ न पुनर्गुणगौरांगे । मत्सरोऽल्पोऽपि निर्मितः ॥ ८४ ॥ इत्यादिः शास्त्रगस्तेषां । विचारः सकलोऽपि हि ॥ मत्सरेण समाछादि । राहुणेव दिवाकरः ॥ ८५ ॥ अथ ते चिंतयंत्येवं । ज्ञातं गुरुविवेचनं ॥ हीनोऽप्ययशंसि यदसा–वुत्कृष्टा अपि नो वयं ॥ ८६ ॥ चित्रशालानिवासेन । यद्दलाभोजनेन च ॥ डुष्करत्वं भवेच्चेत्तत् । साध्यमस्माभिरप्यदः ॥ ८७ ॥ इति ध्यात्वा हृदा स्थूल–भद्रेऽप्युदितमत्सराः ॥ परस्परं प्रीतियुजो–ऽष्टौ मासानत्यवाहयन् ॥ ८८ ॥

अथ सिंहगुहासाधुः । प्रथमं प्रावृडागमे ॥ गुरुं विज्ञापयामास । पूर्वभाववशादिति ॥ ॥ ८९ ॥ स्वामिन्नेषा चतुर्मासी । भवदादेशलेशतः ॥ कोशागृहेऽस्तु मे स्थूल–भद्रस्येवातिडुष्करा ॥ ९० ॥ तद्भावमथ विज्ञायो–पयुज्याऽवग्गुरुस्तदा ॥ वत्स नैषा चतुर्मासी । परिणाममनोहरा ॥ ९१ ॥ तेन मत्सरमुत्सार्य । तिष्ठ स्वत्रमते सुखं ॥ त्याज्योऽसौ मत्सरोऽ-

मिष्यामि गुरोः पार्श्वे । पापव्यापत्वशुद्धये ॥ १३ ॥ कोशापि तं तदा प्रोचे । क्षंतव्यं तत्त्वया मुने ॥ ब्रह्मस्थयापि बोधार्थं । यदेवमसि खेदितः ॥ १४ ॥

इच्छामीति ज्ञणित्वाला–वागत्य गुरुसन्निधौ ॥ सम्यगालोचयामास । प्रपेदे च तपोऽर्पितं ॥ १५ ॥ उपालब्धोऽथ गुरुणा । ज्ञातं ज्ञो स्वपरांतरं ॥ स्थूलज्जद्रोऽपि सेहे तां । चिरस्नेहयुतामपि ॥ १६ ॥ त्वं तु तां विगतस्नेहा–मपि प्रार्थितवान्न्नृशं ॥ अर्थार्जनाद्विगुणश्च । तत्त्ऽनात्मज्ञतां हि धिक् ॥ १७ ॥ लज्जितोऽथ गुरुं नत्वा । विनीतोऽक्षमयत्तदा ॥ विशेषेण विशेषज्ञः । स्थूलज्जद्रमदोऽवदत् ॥ १८ ॥ स्वामिंस्त्वं धुरि धीराणा–मधीराणामहं पुनः ॥ गुणिनां त्वं शिरोरत्नं । निर्गुणानामहं पुनः ॥ १९ ॥ यथा सिंहेन गोमायुः । खद्योतस्तपनेन वा ॥ स्पर्द्धमानो न्नृशं हानिं । म्लानिं च लज्जतेतरां ॥ २० ॥

तथा मया त्वया सार्द्धं । स्पर्द्धमानेन दुर्धिया ॥ हारितं सुकृतं स्वीय–मर्जितं डुर्यशोऽधिकं ॥ २१ ॥ निंदन्नात्मानमत्यर्थ–मिति सानुशयाशयः ॥ क्षमयामास सानंदं । स्थूलज्जद्रं महामुनिं ॥ २२ ॥ पुनः किंचिन्नवोन्निन्न–दुःखौघः स महामुनिः ॥ स्वस्य च स्थूलज्जद्रस्यां–

हृषीकवशगा नराः ॥ २ ॥ गत्वा नृपालमभ्यर्थ्य । प्राप्यासौ रत्नकंवलं ॥ संगोप्य दंडके स-
म्यग् । ववलेऽथ विमूढधीः ॥ ३ ॥ क्वापि पल्ल्यां मुनिं दृष्ट्वा । कीरस्तरुशिरःस्थितः ॥ चौ-
रसेनापतेः स्वामिन् । लक्षं यातीत्यवक् तदा ॥ ४ ॥ सोऽज्ञाय संभ्रमात्साधुं । वीक्ष्योपेक्षां
विनिर्ममे ॥ तस्मिन् गतेऽवदत् कीरो । गतं लक्षं हहा मुधा ॥ ५ ॥ तत् श्रुत्वा चौरसेना-
नीः । पुनः शंकितमानसः ॥ पृष्ठे गत्वाऽमिलत्साधो-रप्राक्षीच्च शुकोदितं ॥ ६ ॥ साधुरप्य-
वदन्नीतः । पुरतोऽस्य यथास्थितं ॥ कृपया तेन मुक्तोऽसौ । स्थानमागान्निजं क्रमात् ॥७॥
अस्यै तं सोऽर्पयामास । विमलं रत्नकंवलं ॥ सापि चंदानिकामध्ये । प्राक्षिपत्तं विशिष्टधीः
॥८॥ सोऽथ तां वारयन्नूचे । मुग्धे मूढेऽकरोः किमु ॥ कंवलः क्लेशलब्धोऽसौ । मलक्लिन्नः कृ-
तो हहा ॥ ९ ॥ सावग् नाहं विमूढास्मि । किंतु मूढो भवान् भृशं ॥ सप्तधातुमये यन्मे ।
देहे चंदनिकाधिके ॥ १० ॥ एतस्माद्बहुतः शुद्धं । संयमं त्वं सुदुर्लभं ॥ ईहसे मलिनं कर्तुं ।
तत्ते साधो वदामि किं ॥ ११ ॥ प्रबुद्धस्तद्गिरा जात-संवेगस्तामवग्मुनिः ॥ साध्वहं वोधितः
साधु । संसाराद्रक्षितस्त्वया ॥ १२ ॥ मिथ्या मे दुष्कृतं भूया-द्धर्मलाभोऽस्तु तेऽनघे ॥ ग-

एको विवेको विश्वैक–रक्षणप्रवणो भवेत् ॥ सोऽपि तत्र क्षणे चक्रे । मदुपेक्षां महामनाः ॥ ३४ ॥ अव्यवच्छिन्नकलं लोकं । प्रपतंतं भवावटे ॥ हेलया पाति यद् ज्ञानं । तन्मे तत्र क्षणे गतं ॥ ३५ ॥ एवं प्रशमसंतोष–विचाराद्याः परे शताः ॥ कृत्यन्ये व्यमुचन्नो मां । मच्छायाश्चिरसंचिताः ॥ ३६ ॥ यद्वा पतनकाले स्या–त्प्रतीपं निखिलं नृणां ॥ तेन मे विषमे जाता । निजा अपि परा इव ॥ ३७ ॥ गुणी संगृह्यतेऽन्योऽपि । तदन्यः स्वोऽपि मुच्यते ॥ देहजोऽप्युच्यते व्याधि–र्गृह्यते चान्यदौषधं ॥ ३८ ॥ उक्तं च —यांति न्यायप्रपन्नस्य । तिर्यंचोऽपि सहायतां ॥ अपंथानं तु गच्छंतं । सोदरोऽपि विमुंचति ॥ ३९ ॥ गुर्वाज्ञाखंडनाद्यद्वा । जाता मे मानखंडना ॥ यादृशं दीयते दानं । तादृशं प्राप्यते फलं ॥ ४० ॥ यद्वा गुणाय स्पर्द्धयं । यद् ज्ञानं स्वपरांतरं ॥ यतः प्रत्येति नो मूर्खो । विकटं भटकं विना ॥ ४१ ॥ यथा—अविमृश्य कृतं कार्यं । न गुणाय नृणां भवेत् ॥ किंतु तं तनुते पापं । जीवतां याति यो न हि ॥ ४२ ॥

यथा श्रीजयराजेन । चूतः सर्वरुजापहः ॥ रत्नसाद्भेदितो जज्ञे । भृशं संतापपोषकः ॥

तरं चित्ते व्यचारयत् ॥ २३ ॥ स्थूलभद्रेण विजितः । कामोऽयं त्रिजगज्जयी ॥ तेनाप्यहं जि-
तो यत्त—त्तेन साम्यं कुतो मम ॥ २४ ॥ कोशा श्रीस्थूलभद्रेण । प्रबोध्य श्राविका कृता ॥
तयाहं बोधितो यत्त—त्तेन साम्यं कुतो मम ॥ २५ ॥ सिंहवत्सिंगव्होज्योऽसौ । वशी रूक्षा-
शनोऽप्यहं ॥ कामी कपोतवद्यत्र । तेन साम्यं कुतो मम ॥ २६ ॥ यत्रासौ चतुरो मासान्
। क्षणवत्तस्थिवान् सुखं ॥ तत्राहं चतुरो मासान् । विगुप्तः क्षणवासतः ॥ २७ ॥ ततः क्व
स्थूलभद्रोऽसौ । धैर्यधोरणिबंधुरः ॥ तरलस्तूलवत्क्वाहं । वर्यवैर्यविवर्जितः ॥ २८ ॥ सुवर्णे-
न समं गुंजा । तोल्यते यद्यपीश्वरैः ॥ अग्निस्थानेऽल्पसत्वत्वा—त्तत्तुल्या स्यात्तथापि न ॥
॥२९॥ तथाहं स्थूलभद्रेण । समो मुनितयाऽभवं ॥ परं सत्वक्षणेऽभूवं । तत्तुल्यो न कथंचन
॥ ३० ॥ मेरुसर्षपयोरब्धि—बिंद्वोश्च स्याद्यदंतरं ॥ तस्मादप्याधिकं तस्य । मुनेश्च मम सत्वतः
॥३१॥ यत्तेनापि समं स्पर्द्धा—ऽनात्मज्ञेन मया कृता ॥ युक्तं तस्याः फलं प्राप्तं । यद्भुतं तद्विलूयते
॥ ३२ ॥ यद्वा—अहो मे मंदभाग्यत्वं । पश्यंतु विबुधा जनाः ॥ सदाचार्यैर्यदहं त्यक्त—श्चिरं प-
रिचितैरपि ॥ ३३ ॥

श्रीस्थूलभद्रं मुनिं ॥ ५१ ॥ यथा न सूर्यादधिका दिवि ग्रहाः। कल्पद्रुमान्नो फलिनोऽपि भूरुहाः ॥ सज्जात्यजांबूनदतो न धातवः । श्रीस्थूलभद्रान्न तथात्र साधवः ॥ ५२ ॥ लोकोत्तरा गुणगणाः किल यस्य शस्या । लोकोत्तरं विमलशीलमलं सलीलं ॥ लोकोत्तरं सकलचित्रकरं चरित्रं । लोकोत्तरः स जयताच्छकडालसूनुः ॥ ५३ ॥ भुर्जं नभो लेखनिका सुमेरुः । सिंधुर्मषीभाजनमेव पृथ्वी ॥ चेल्लेखको लेखपतिस्तदा स्या-त्संख्या गुणानां शकडालसूनोः ॥५४॥ अन्यैरप्युक्तं—श्रीशांतिनाथादपरो न दानी । दशार्णभद्रादपरो न मानी ॥ श्रीशालिभद्रादपरो न भोगी । श्रीस्थूलभद्रादपरो न योगी ॥ ५५ ॥ याते दिने विधिवशाद्विपरीतभावं । दंदं भिनत्ति निजहस्तगतापि शस्त्री ॥ श्रीस्थूलभद्रविजये यदियं बभूव । पण्यांगनापि तव दर्पक दर्पहंत्री ॥ ५६ ॥ रे काम वामनयना तव मुख्यमस्त्रं । वीरा वसंतपिकपंचमचंद्रमुख्याः ॥ त्वत्सेवका हरिविरंचिमहेश्वराद्या । हाहा हताश मुनिनापि कथं हतस्त्वं ॥ ५७ ॥

श्रीनंदिषेणरथनेमिमुनीश्वराद्यै-र्बुध्ध्या त्वया मदन रे मुनिरेष दृष्टः ॥ ज्ञातं न नेमिमुनिजंबुसुदर्शनानां । तुर्यो भविष्यति निहत्य रणांगणे मां ॥ ५८ ॥ श्रीनेमितोऽपि शकडाल-

॥ ४३ ॥ यथा चारभटा नारी । नकुलं हितकारकं ॥ अविमृश्य स्वयं हत्वा । संतापं प्राप संभृतं ॥ ४४ ॥ तथाहमप्यदः कार्यं । कृत्वा रभसयोगतः ॥ प्रापं प्रचुरसंतापं । नीतिवाक्यं हि नान्यथा ॥ ४५ ॥ यतः—सगुणमपगुणं वा कुर्वता कार्यजातं । परिणतिरवधार्या यत्नतः पंडितेन ॥ अतिरभसकृतानां कर्मणामाविपत्ते-र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ४६ ॥ इत्यादि चिंतयन्नुच्चै-र्व्यक्तभक्तिभरान्वितः ॥ स्थूलभद्रमुनिं मोदात् । स्तोतुमेवं प्रचक्रमे ॥ ४७ ॥ श्रीस्थूलभद्र शकटालकुलावतंस । विश्वत्रयीविमलमानसराजहंस ॥ सम्यक्त्वलीलशुचिशीलगुणैकशंस । जीयाः प्रभो रचितसिद्धिरमारिरंस ॥ ४८ ॥ गिरौ गुहायां विजने वनांतरे । वासं श्रयंतो वशिनः सहस्रशः ॥ हर्म्येऽतिरम्ये युवतिजनांतिके । वशी स एकः शकडालनंदनः ॥ ४९ ॥ योऽग्नौ प्रविष्टोऽपि हि नैव दग्ध-श्छिन्नो न खड्गाग्रकृतप्रचारः ॥ कृष्णाहिरंध्रेऽप्युषितो न दष्टो । नाक्तोंजनागारनिवास्यहो यः ॥ ५० ॥

वेश्या रागवती सदा तदनुगा षड्भी रसैर्भोजनं । शुभ्रं धाम मनोहरं वपुरहो नव्यो वयःसंगमः ॥ कालोऽयं जलदाविलस्तदपि यः कामं जिगायादरा-त्तं वंदे युवतिप्रबोधजनकं

तवे ॥ तेनाम्रलुंबिका बिद्धा । शरैकैकेन सुंदरा ॥ ६८ ॥ अनुपुंखं शरश्रेणी–माविद्ध्यार्धाच्च चंद्रकान् ॥ मूलं छित्वा समाकृष्य । तत्स्थेनास्यै समर्पिता ॥ ६९ ॥ तथाप्यरंजितस्वांता । कोशा स्मितनितानना ॥ तंप्रत्यवग् वचो विद्वन् । दुष्करं शिक्षितस्य किं ॥ ७० ॥

अथ सर्षपराशौ सा । शुच्यग्र सुमसंगते ॥ स्वनृत्यं दर्शयामास । नानाङ्गिमनोहरं ॥ ७१ ॥ रंजितो रथिकोऽत्यर्थं । कलयामलया तया ॥ प्रशंसंस्तां तया प्रोचे । शृणु वच्मि यथातुनं ॥ ७२ ॥ नृत्यं न दुष्करं नाम्र–लुंबीछेदोऽपि दुष्करः ॥ दुष्करं स्थूलभद्रोऽयं । यन्मकेऽस्मावशिक्षितं ॥ ७३ ॥ यतः––न दुक्करं अंबियलुंबितोडनं । न दुक्करं सरसवनच्चियं च ॥ तं दुक्करं जं च महाणुभावो । जंसो मुणी पमयवणंमि वुच्छो ॥ ७४ ॥ भोगान् समं मया यत्र । द्वादशाब्दानि भुक्तवान् ॥ अखंडितव्रतः सोऽस्था–त्तत्रैव वरवेश्मनि ॥ ७५ ॥ वह्निप्रचारतो दुग्धं । यथा स्त्रीसंगतस्तथा ॥ योगिनां दुष्यते चेतः । स्थूलभद्रमुनिं विना ॥ ७६ ॥ स्त्रीपार्श्वे कस्तथा स्थातुं । दिनमेकमपि क्षमः ॥ यथाऽस्थाच्चतुरो मासान् । स्थूलभद्रोऽद्भुतव्रतः ॥ ७७ ॥ आहारः षड्रसाधारः । पवित्रा चित्रशालिका ॥ रामाभिरामा सविधे । यौव-

सुतं विचार्य । मन्यामहे वयममुं भटमेकमेव ॥ देवोऽद्रिदुर्गमधिरुह्य जिगाय मोहं । यन्मोहनालयमयं तु वशी प्रविश्य ॥ ५९ ॥ कोशाचलाचलदृगंचलचालनोत्थ—संकेतकंप्रवपुषः पतिताः कुमाराः ॥ श्रीस्थूलभद्र विषमायुधदंदशूक—दष्टोऽपि पूर्वमनया न मृतोऽसि चित्रं ॥ ॥ ६० ॥ स्त्रीविभ्रमैः स्खलति लोलमना न धीरः । श्रीस्थूलभद्र इव तादृशसंकटेऽपि ॥ चूर्णायते दृषदयोऽपि जलायते च । वैडूर्यमेति विकृतिं ज्वलनात्पुनर्न ॥ ६१ ॥

इति स्तुत्वा भृशं भक्त्या । स्थूलभद्रं महामुनिं ॥ स मोदमेदुरः साधुः । स्वं कृतार्थममन्यत ॥ ६२ ॥ संसाध्यानशनं शुद्ध—संयमाः सुसमाधिना ॥ संभूतिविजयाचार्या—स्त्रिदिवं प्रापुरन्यदा ॥ ६३ ॥ कोशा राज्ञान्यदैकस्य । रथिकस्य ददे मुदा ॥ सोऽपि तस्या गृहे वासं । व्यधाच्च विविधेच्छया ॥६४॥ सकलाभिः कलाभिः स । विज्ञानैर्विविधैरपि ॥ न तां रंजयितुं शक्तो—ऽजनि सद्धर्मरंजितां ॥ ६५ ॥ किंतु सा धीमती तस्य । पुरतः पुण्यहेतवे ॥ स्थूलभद्रगुणग्रामं । प्रशशंस प्रमोदतः ॥ ६६ ॥ न तथोपाचरच्चैनं । शुचिशीलगुणार्थिनी ॥ क्षीरपानं यतः कृत्वा । क्षारनीरं क ईहते ॥ ६७ ॥ अशोकवनिकामध्ये । नीत्वा तां चित्रदे-

तदा नेपालदेशेऽभूद् । द्वादशांगधरो गुरुः ॥ भद्रबाहुर्धृतमहा–प्राणध्यानो युगोत्तमः ॥
॥ ८९ ॥ संघाटकेन संघस्तं । पूर्वाण्यध्यापयेत्यवक् ॥ पत्तनेऽत्र समागत्य । स्थूलभद्रादिका-
न्मुनीन् ॥९०॥ श्रुत्वेति तद्वचः सोचे । प्रारब्धवानस्मि सांप्रतं ॥ द्वादशाब्दमितमहा–प्राण-
ध्यानप्रवेशतः ॥ ९१ ॥ संघाटको निवृत्याथ । तत्संघस्य न्यवेदयत् ॥ संघः संघाटके प्रेष्य ।
पुनस्तं प्रोचिवानिति ॥ ९२ ॥ संघाज्ञां मन्यते यो न । को दंडस्तस्य जायते ॥ सोऽवक् सो-
द्घाट्यत क्षिप्रं । सोचे तत्र किमुचितं ॥ ९३ ॥ प्रीतोऽवक् सोऽपराधं मे । सर्वोऽमुं क्षाम्य-
तु ध्रुव ॥ उत्तमानां यतः कोपः । प्रणामांतः प्रकल्पितः ॥ ९४ ॥ शिष्यान् प्रेषयतु प्राज्ञान
। पाठयाम्यशठो यथा ॥ श्रीजिनाज्ञेव संघाज्ञा । मान्या मानवतामपि ॥ ९४ ॥ संज्ञाभू-
म्यागतस्त्वेका–मेकां भिक्षाक्षणागतः ॥ कालवेलाक्षणे चोभे । तिस्रश्चावश्यके तथा ॥९५॥

एवं सप्ताहि दास्येऽहं । वाचनाः शिष्यसंहतेः ॥ ध्यानमध्येऽपि येनोक्तः । परार्थः स्वा-
र्थतोऽधिकः ॥ ९६ ॥ यस्मादंतर्मुहूर्त्तेन । मातृकेवाखिलं श्रुतं ॥ आदेरंतं ततोऽप्यादिं । याव-
द्गुण्येत लीलया ।९७॥ ध्यानस्य तस्य पर्यंते । वाचनाः सकलं दिनं ॥ प्रदास्यामीत्युदित्वा-

ने पावनं तनौ ॥ ७८ ॥ एकैकमप्यदः पुंसां । व्रतलोपाय तत्पुनः ॥ चतुष्टयमपि स्थूल-भ-द्रस्य व्रतपोषकं ॥ ७९ ॥

रमणीरजनीरौद्रे । वसंतो यौवने वने ॥ स्मरचौरेण मुष्यंते । स्थूलभद्रं विना परे ॥ ॥ ८० ॥ चित्रकृच्चरितं स्तुत्वा । स्थूलभद्रमुनीश्वरं ॥ पुनरन्यस्तवे युक्तं । मौनमेव मनोहरं ॥ ८१ ॥ धवलोऽसि जइवि सुंदर । तहवि तए मज्झ रंजियं हिययं ॥ रागभरियंमि हियए । विसयविरत्तो न रत्तोसि ॥ ८२ ॥ सोचे शुभ्रगुणः कोऽसौ । भृशमेवं प्रशस्यते ॥ स्माह सा स्थूलभद्रोऽयं । स्वामी धर्मगुरुश्च मे ॥ ८३ ॥ पप्रच्छ स्थूलभद्रस्य । चरित्रं सोऽथ विस्मितः ॥ सा मूलतोऽवदत्तेन । बुद्धोऽगृह्णाद्व्रतं द्रुतं ॥ ८४ ॥ तस्मिन्नवसरेऽत्राभू-दुष्कालो द्वादशा-ब्दिकः ॥ जग्मुर्मुमुक्षवस्तेन । तटे वार्द्धेरितस्ततः ॥ ८५ ॥ तत्रातिक्रम्य दुष्कालं । करालं ते महर्षयः ॥ सुभिक्षसंभवे भूयः । पाटलीपुत्रमाययुः ॥ ८६ ॥ गुणनाऽभावतस्तेषां । सिद्धां-तो विस्मृतस्तदा ॥ शास्त्रे स्वामिनि सुंदर्यां । न स्थैर्यं जायते यतः ॥ ८७ ॥ स्मारं स्मारं परावर्त्यै-कादशांगी यतिध्वजैः ॥ यत्नतो मेलिता यस्मा-दनिर्विण्णं श्रियः पदं ॥ ८८ ॥

हि साधवः ॥ ९ ॥ इतश्च तत्रैव पुरे । स्थूलभद्रस्य जामयः ॥ सप्तोपात्तव्रताः संति । य-
क्षाद्याः शुद्धसंयमाः ॥ १० ॥ अथोद्यानस्थितान् ॥ सूरीन् । स्थूलभद्रसमन्वितान् ॥ ज्ञात्वा
ते वंदितुं जग्मु-र्वैयाः कस्त्वर्पयो हि न ॥ ११ ॥ वंदित्वा विधिवत्सूरि-पादद्वंद्वं प्रमोदतः ॥
ताः पप्रच्छुः भ्राता क्वास्ति । स्थूलभद्रो महामुनिः ॥ १२ ॥ सूरयोऽप्यवदन्नस्ति । परत्र गु-
णयन्नसौ ॥ अद्रेरिव गणान्नीता । भवंति यतयो यतः ॥ १३ ॥ तत् श्रुत्वा ता ययुस्तत्र । नं-
तुं दूरेऽपि तं मुनिं ॥ गुणानुरागवश्यस्य । दूरे हि किमु देहिनः ॥ १४ ॥ आयांतीः सोदरा
वीक्ष्य । स किंचिद्गर्विताशयः ॥ लब्धिं दर्शयितुं स्वीयां । सिंहरूपोऽभवत्ततः ॥ १५ ॥ सिंहं
समीक्ष्य भीतास्ताः । पुप्रच्छुर्गुरुसन्निधौ ॥ सिंहेन भक्षितः स्वामि-न्नार्यो वर्यगुणो हहा ॥१६॥
ऊचे गुरुर्न हि सिंहः । स भ्राता लब्धिभाजनं ॥ तत् श्रुत्वा भक्तितो गत्वा । नेमुस्तं भक्ति-
भासुराः ॥ १७ ॥ सोऽपि स्वरूपमप्राक्षीत् । स्वकुलस्याखिलं तदा ॥ सहवासो निजैर्येन ।
कथानामाकरो मतः ॥ १८ ॥ यक्षाप्युवाच भगवन् । भ्राता वः श्रीयकोऽन्यदा ॥ वैराग्याद्व्र-
तमादाय । वर्षाचारचणोऽजनि ॥ १९ ॥ वार्षिकेऽथ समायाते । क्रमात्पर्वण्यसौ मुनिः ॥

सौ । व्यसृजत्तन्मुनिद्वयं ॥ ९८ ॥ स्थूलभद्रादिका तत्र । साधुपंचशती तदा ॥ गताध्येतुं यतो ज्ञान–कृते कुर्यान्न किं जनः ॥ ९९ ॥ साध्येतुमक्रमात्यर्थं । वाचनानामभावतः ॥ पराभज्यागमत्पश्चात् । पाठो हि कठिनो यतः ॥ ६०० ॥ एक एव स्थितस्तत्र । स्थूलभद्रः स्थिराशयः । सिद्धिः सर्वापि येन स्याद् । ध्रुवमेकाग्रचेतसां ॥१॥ प्राज्ञः श्रीस्थूलभद्रोऽपि । भद्रबाहुपदांतिके ॥ अपाठीदष्टभिर्वर्षैः । पूर्वाणामष्टकं तदा ॥ २ ॥ तेन ध्यानावसानेऽथ । स पृष्टो भद्रबाहुना ॥ वत्स किं खिद्यसे सोऽवग् । न खिद्येऽहं कथंचन ॥ ३ ॥ अप्राक्षीत्स्थूलभद्रोऽपि । विनयात्तं मुनीश्वरं ॥ भगवन् किं मयाधीतं । शेषं वा किमु तिष्ठति ॥ ४ ॥ भद्रबाहुस्ततः स्माह । वत्स स्वच्छमते शृणु ॥ अधीतं सर्षपं मेरुं । शेषं बुध्यस्व धीनिधे ॥ ५ ॥

श्रुत्वेति यत्नतः सोऽपि । पठतिस्म तदंतिके ॥ यतः पूर्वं श्रुतज्ञानं । संयमश्च ततः परं ॥ ६ ॥ सूरिरप्यन्वहं प्राज्ञं । प्रपाठयति तं मुदा ॥ यतः सुक्षेत्रमासाद्य । बीजं को न वपेद्बुधः ॥ ७ ॥ दशपूर्वी द्विवस्तूना । तेनाधीतातियत्नतः ॥ यतोऽभ्यासवशाद्विद्या–ऽनवद्या जायते नृणां ॥ ८ ॥ सूरयोऽथ समं तेन । विहरंतो वसुंधरां ॥ पाडलीपुत्रमागत्य–न्नैकत्रस्था

या ॥ तत्तथाख्यानपूर्वं च । श्रीसंघाय समर्पितं ॥ ३१ ॥ चूले द्वे प्रथमांगस्य । प्रथमाध्यय-
नद्वयं ॥ दशवैकालिकस्यान्य–दिति संघेन योजितं ॥ ३२ ॥ इत्युदित्वा मुनिं नत्वा । मुदा
ताः स्थानमाययुः ॥ न तिष्ठंति चिरं कालं । यत्साध्व्यः साधुसन्निधौ ॥ ३३ ॥ द्वितीयेऽथ
दिने स्थूल–भद्रो विनयान्वितः ॥ गत्वा गुर्वंतिकेऽवोच–द्देहि मे वाचनां विभो ॥ ३४ ॥

सूरिर्दूनोऽभृशं तस्मिन् । वाचनां नो ददौ तदा ॥ मौनमेव श्रयेद्येनौ–चित्याद्भ्रश्यंति नो
बुधाः ॥ ३५ ॥ पप्रच्छ कारणं सोऽथ । गुरुः स्माह रुषा ततः ॥ न वेत्स्यजीर्णपूर्णोऽसि ।
पाठनस्योचितोऽपि न ॥ ३६ ॥ यतः–अजीर्णं तपसः क्रोधो । ज्ञानाजीर्णमहंकृतिः ॥ परत-
प्तिः क्रियाऽजीर्णं–मन्नाजीर्णं विसूचिका ॥ ३७ ॥ तत् श्रुत्वा स निजं दोषं । स्मृत्वा ह्यःकृ-
तमुच्चकैः ॥ नैतत्पुनः करिष्यामी–त्युदित्वाऽक्रमयत्कुरुं ॥ ३८ ॥ सूरिः प्रसन्नचित्तोऽथ । दत्वा
शिक्षां यथोचितां ॥ पुनस्तं पाठयामास । संतो हि नतवत्सलाः ॥ ३९ ॥ नेदं देयं त्वयान्य-
स्य । पुनः प्रोवाच तं गुरुः ॥ स्तोकसत्वा यतः सत्वा । भाविनोऽतः परं भुवि ॥ ४० ॥

तथेति प्रतिपद्यासौ । तत्तथैवाकरोत्ततः ॥ तेनोज्झिता चतुःपूर्वी । दशमांतं द्विवस्तुयुग्

असमर्थोऽप्यनक्ताय । मूढया कारितो मया ॥ २० ॥ निशीथे क्षुत्तृषाव्याप्तः। सोऽजनि व्याकुलो नृशं ॥ नोष्णतापं हि सहते । कोमलः कुसुमोच्चयः ॥ २१ ॥ गृहीतानशनः सोऽथ । स्मृतदेवगुरुक्रमः ॥ समाधिमरणात्सद्यो । विपद्य त्रिदिवं ययौ ॥ २२ ॥ ततोऽनुशयसंभार—संभृतां मामभोजनां ॥ संघोऽवोचत् शुभे शोकं । त्यज निर्माहि भोजनं ॥ २३ ॥ दोषः स्तोकोऽपि ते नास्ति । पापवार्त्ता कुतस्ततः ॥ पापं लगति दुष्टेन । चेतसा तत्त्वास्ति न ॥ ॥ २४ ॥ यतः—

मन एव मनुष्याणां । कारणं बंधमोक्षयोः ॥ बंधस्तु विषयासंगि । मुक्तिर्निर्विषयं मनः ॥ २५ ॥ अतः समाधिमाधाय । वचो मन्यस्व नोऽधुना ॥ संघोऽर्हतोऽपि मान्योऽयं । किं पुनः शेषदेहिनां ॥ २६ ॥ इत्युक्तामप्यभुंजानां । भृशं मां संशयाकुलां ॥ विदेहे देवतानैषीत् । क्षणेनापि जिनांतिके ॥ २७ ॥ नत्वा पृष्टः। प्रभुः स्माह मुनिहत्यात्र नो तव ॥ ततः प्रमुदितावोचं । देहि प्रभो सुखादिकां ॥ २८ ॥ भावना च विमुक्तिश्च । रतिकल्पमथापरं ॥ तथा विचित्रचर्येत्य—ध्ययनानां चतुष्टयं ॥ २९ ॥ स्वामिना मे स्वयं दत्तं । श्रुतमेव धृतं म-

गं—गीयमानगुणोत्करः ॥ ५२ ॥ वंदारुवृंदविहितो—पचारस्तरसासुरः ॥ पदे पदे वंदमानः । पुरीचैत्यानि भक्तितः ॥ ५३ ॥ क्रमेण पूर्वमित्रस्य । धनदेवस्य सद्मनि ॥ जंगमामरशाखीव । जगाम भुवनाद्भुतः ॥ ५४ ॥ धनेश्वर्यपि दृष्ट्वा तं । धनदेवप्रिया तदा ॥ ववंदे व्यक्तभक्त्याशु । वंद्याः कस्य न तादृशाः ॥ ५५ ॥ गुरूपवेशनार्हं सा—ऽदापयन्मद्रदासनं ॥ अंगणस्थेऽसमग्रतरौ । नालवालं करोति कः ॥ ५६ ॥ अलंचक्रे गुरुरपि । प्रतिलिख्य तदासनं ॥ रंगभंगं न कुर्वंति । यतः कस्यापि कोविदाः ॥ ५७ ॥ ततस्तां धर्मनिर्वाह—वार्त्तया सूरिरामुपि ॥ सादरं प्रीणयामास । यतयो ह्यप्रियंकराः ॥ ५८ ॥ भर्त्तुर्वियोगविधुरा—मप्राक्षीत्तां गुरुस्ततः ॥ धनदेवो धवः किं ते । आवसारे न दृश्यते ॥ ५९ ॥ धनेश्वर्यप्यदः प्राह । भर्त्तासौ भगवन्मम ॥ ॥ धनं सर्वमभूत्क्षिप्ते । यद्वाहिर्व्ययतेस्म तत ॥ ६० ॥

तृणादपि लघुस्तेन । सोऽर्थहीनोऽत्रवत्पुरे ॥ अर्थानां गौरवं येन । नराणां नो पुनर्यतः ॥ ६१ ॥ ततोऽसौ पूर्वजनिधी—नाप पश्यन्नपि क्षितौ ॥ विपरीते विधौ येन । श्रीः करस्थापि नश्यति ॥ ६२ ॥ ततो देशांतरे सोऽगा—द्रव्योपार्जनवांछया ॥ आशया नास्ति तल्लोके ।

॥ ४१ ॥ सोऽधीतद्वादशांगोऽथ । सृजन् द्वादशधा तपः ॥ भावना द्वादश ध्यायन् । भाति-स्म द्वादशात्मवत् ॥ ४२ ॥ गुरुर्योग्यममुं ज्ञात्वा । श्रित्वा श्रीसंघसंमतं ॥ सुदिने सुक्षणे स्वीये । पट्टेऽतिष्ठिपदादरात् ॥ ४३ ॥ सप्तत्यग्रे वर्षशते । वीरमोक्षात्सते सति ॥ समाधिना ययौ स्वर्गं । भद्रबाहुरपि प्रभुः ॥ ४४ ॥ अथ श्रीस्थूलभद्रोऽपि । सच्चक्रकृतसंमदः ॥ भानु-वद्भासयामास । भुवनं निजगोगणैः ॥ ४५ ॥ स्थूलभद्रोऽथ भगवान् । गुरुर्गुणिगणाग्रणीः ॥ विहरन्नन्यदा प्राप । श्रावस्तीं नगरीं क्रमात् ॥ ४६ ॥ तस्थौ तत्र प्रभुर्बाह्यो-द्याने बहुपरिच्छ-दः ॥ विधिना वंदितुं चागात् । प्रमोदात्तत्पुरीजनः ॥४७॥ ततोऽसौ भगवांश्चक्रे । देशनां बो-धबंधुरां ॥ साम्यभाजां यतः स्वार्थ-परार्थौ सदृशौ सदा ॥ ४८ ॥ सभायामथ सूरींद्रः । श्रा-वस्तीवासिनं द्विजं ॥ धनदेवं निजं मित्र-मदृष्ट्वैवमचिंतयत् ॥ ४९ ॥ नूनं स मे सुहृन्नास्ति । पुर्यामिह कुतोऽन्यथा ॥ सर्वोऽप्यागात्पुरीलोकः । स्नेहलोऽपि पुनर्न सः ॥ ५० ॥

देशांतरगतोऽयं स्याद् । ग्लानो वा स्यादिति स्वयं ॥ गत्वास्य गेहे जानामि । सोऽनु-ग्राह्यो यतो मम ॥ ५१ ॥ एवं विचिंत्य भगवान् । स्थूलभद्रो वनात्ततः ॥ सुस्वरश्राविकाव-

यान्यदा मुदा ॥ ७४ ॥ ततोऽसौ वसतौ गत्वा । स्थूलभद्रमवंदत ॥ यतयो जंगमं तीर्थ-मि-
ति यद् ज्ञानिनां वचः ॥ ७५ ॥ स लब्धधर्मलाभाशी-र्हृष्टः प्रोचे कृतांजलिः ॥ दारिद्र्यसागरं
तीर्णः । प्रभोऽहं त्वत्प्रसादतः ॥ ७६ ॥ ततोऽहं त्वत्प्रसादस्या-ऽनृणः स्यां न कथंचन ॥ त्वं
मे स्वामी गुरुस्त्वं च । तदादिश करोमि किं ॥७७॥ गुरुः स्माह भवान् भूयात् । प्रत्यहं पर-
मार्हतः ॥ तथेत्युक्त्वा धनदेवो । निजं स्थानं पुनर्ययौ ॥ ७८ ॥ अजायेतामुभौ शिष्यौ । स्थू-
लभद्रगुरोरथ ॥ आर्यमहागिरिश्चार्य-सुहस्तीति सुविश्रुतौ ॥ ७९ ॥ यक्षार्यया जनन्येव । तौ
बाल्यादपि पालितौ ॥ तेनार्योपपदौ जातौ । महागिरिसुहस्तिनौ ॥ ८० ॥

निरतीचारचारित्रौ । स्थूलभद्रपदांतिके ॥ दशपूर्वीमिमौ सांगा-मधीयातेस्म हेलया ॥
॥ ८१ ॥ गीतार्थौ वाग्मिनौ लब्धि-मंतौ गुणगणान्वितौ ॥ आयुष्मंतौ क्रियानिष्ठौ । पवित्रौ
सर्वसंमतौ ॥ ८२ ॥ निजानुरूपौ विज्ञाय । स्थूलभद्रोऽपि तौ मुनी ॥ अस्थापयन्निजे पट्टे ।
कृतातुच्छमहोत्सवं ॥ ८३ ॥ एवं श्रीस्थूलभद्रोऽपि । विहृत्य सुचिरं क्षितौ ॥ प्रपन्नानशनः
काले । कृत्वा प्राप सुरालयं ॥ ८४ ॥ भूभामिनीभालललामलीलः । सदा स्वयं शीलितशु-

चरित्रं ॥ ६३ ॥

यज्जैनैर्नो विधीयते ॥ ६३ ॥ तन्त्रेहेऽथ निधिस्थानं । ज्ञात्वा श्रुतबलाद्गुरुः ॥ आख्यातुं स्पृह-
यामास । तस्मै कारुण्यसागरः ॥ ६४ ॥ व्याजाद्धर्मोपदेशस्य । ततोऽसौ हस्तसंज्ञया ॥ अ-
धोभागस्थितनिधि-स्तंभं तस्मै प्रदर्शयन् ॥ ६५ ॥ अवादीदयि संसारो । विषमः पद्मयकी-
दृशः ॥ गृहमीदृग् पतेस्ते च । व्यवसायश्च तादृशः ॥ ६६ ॥ मुहुर्मुहुर्धनेश्वर्या । इत्थमाख्या-
य सूरिराट् ॥ विहर्तुमन्यत्र गतो । विहारो यद्यतिप्रियः ॥ ६७ ॥ विना लाभोदयं कर्म । ध-
नदेवोऽप्यथ द्विजः ॥ गतो यादृक् तादृगागात् । कुतः पुण्यं विना फलं ॥ ६८ ॥ वृत्तांतं स्थू-
लभद्रस्य । स्माह तस्य धनेश्वरी ॥ सोऽपि प्रमुदितोऽपृच्छत् । किमूचे भगवानिति ॥ ६९ ॥
साप्यधात्स्थूलभद्रोऽत्र । व्यधात्सद्धर्मदेशनां ॥ विधाय संमुखं हस्तं । स्तंभस्यास्य मुहुर्मुहुः
॥७०॥ धनदेवस्ततो दध्यौ । तादृग्ज्ञानमहोदधिः ॥ तनुते तादृशीं चेष्टां । शिशुवन्नैव निष्फलां
॥ ७१ ॥ यत्कराभिनयश्चक्रे । स्तंभमुद्दिश्य सूरिणा ॥ अस्य स्तंभस्य तन्नून-मधः संभाव्यते
निधिः ॥ ७२ ॥ धनदेवो धनेनाभू-त्तेनायं धनदोपमः ॥ प्रसन्ना गुरवः किं किं । न प्रसादं
वितन्वते ॥ ७३ ॥ ततोऽसौ स्थूलभद्रस्य । स्वमित्रस्योपकारिणः ॥ पाटलीपुरमगम-द्वंदना-

द्धशीलः ॥ सध्ध्यानविध्यापितकर्मकीलः । पुण्यक्रियायोगगतप्रमीलः ॥ ८५ ॥ निरुद्धकामप्रचुरप्रचारः । प्रकाशिताशेषविचारचारः ॥ पीयूषयूषोपमवाक्यसारः । संत्यक्तसंसारिकसौख्यसारः ॥ ८६ ॥

दुर्बोधलोकप्रतिबोधदक्षः । सदा नमद्दानवदेवयक्षः ॥ श्रीस्थूलभद्रो वसुधातलेऽत्र । जीयाच्चिरं पंकजपत्रनेत्रः ॥ ८७ ॥ एवं श्रीस्थूलभद्रप्रवरमुनिपतेः पुण्यलावण्यमूर्त्तेः । सर्पत्कंदर्पवीरप्रकटपटुजयप्राप्तसुप्राज्यकीर्त्तेः ॥ एतच्चित्रं चरित्रं कृतसुकृतजनश्रीजयानंदलेख्यं । शश्वद्भव्यव्रजानां प्रथयतु परमां शुद्धशीलप्रवृत्तिं ॥ ८८ ॥ इति श्रीजयानंदसूरिरचितं श्रीस्थूलभद्रस्य चरित्रं संपूर्णं ॥ श्रीरस्तु ॥ आ ग्रंथ श्रीजामनगरनिवासी पंडित श्रावक हीरालाल हंसराजे स्वपरना श्रेयमाटे पोताना श्रीजैनभास्करोदय छापखानामां छापी प्रसिद्ध कर्यो छे. ॥ श्रीरस्तु ॥

॥ समाप्तोऽयं ग्रंथो गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

———

